श्रीगणेशायनमः॥ ॥श्रीमतींगौरवर्णाङ्गींश्यामांश्यामललामिकां श्यामाङ्गभूषणंवंदे कृष्णंनैम्बस्करवाश्रयं १ नमस्कृत्यजगद्वंद्यंनिंबादित्यंभयच्छिदम् पूर्वसिद्धांतवाक्येन वर्षकृत्यंप्रतन्यते २ इहखलुप्रचंडोद्दंडकालोत्प्रेक्षणनष्टविविधमनोरथानांशीतोष्णादिद्वंद्वप्रचुरबहुलतरश्रमोद्वेजितचेतसांश्रीमन्निंबार्कसंप्रदायस्थौदंबरकृष्यादिकृतार्थपंचकादिनिबंधानांबहुलतरत्वात्तल्लेखनविचारविधिपरमालसानांस्ववैष्णवानांहितार्थायनिर्णीतसिद्धांतवाक्येन वर्षकृत्यंविशदयति अविद्धैकादशीसक्तोविष्णुधर्मविधायकः विष्णुधर्मोपदिष्टस्तुसहिवैष्णवउच्यते इतिस्कांदोक्तेर्व्रतविधिज्ञानादेववैष्णवत्वंस्यात्तदभावेतद्धानिरेव तत्रोक्तंश्रीमन्नारदपंचरात्रेपि अविज्ञातव्रतविधिर्वैष्णवःस्यादवैष्णवः तस्माद्विज्ञानसाराःस्युर्वैष्णवाव्रतसेविनइति तत्रतावद्वैष्णवैस्तुसदाचारोक्तविधिनाव्रतानुष्ठानंकर्तव्यं सदाचारस्तुदेवलेनाभिहितः यस्मिन्कुलेयदाचारःपारंपर्यक्रमातृगतः श्रुतिस्मृत्यविरोधेनसदाचारःसउच्यतेइति सव्रतविधिर्द्विविधः पूर्वविद्धाचरणरूपउत्तरविद्धाचरणरूपश्चेति तत्रसर्ववैष्णवैस्तुपूर्वस्त्याज्यःउत्तरो

ग्राह्यः तच्चोक्तंश्रीमन्नारदपंचरात्रे सर्वसिद्धांतविज्ञानंवैष्णवानांविदुर्बुधाः पूर्वविद्धतिथित्यागार्वै
ष्णवस्यहिलक्षणम् तस्मादुत्तरसंयोगिमतंवैष्णविकव्रतमिति तत्रैकादशीव्रतेऽस्यैवबलवत्तर-
त्वमेकस्मिन्नेवमासेद्विरनुष्ठानत्वाद्वैष्णवस्मार्त्तादीनांसर्वेषामपीष्टतमत्वाच्च तावत्तस्याव्रत
विधिर्निर्णीयते विशेषतोदशमीवेधस्यहेयत्वंदर्शयति श्रीमन्नारदः दशम्यांचैवविद्धायामे
कादश्यामुपोषितः तस्यायुःक्षीयतेनित्यंनारदोहंब्रवीमिवः संततिश्चविनश्येतसत्यंसत्यंन
चान्यथा इति ब्रह्मवैवर्ते गंगोदकेनवैपूर्णोयथात्याज्योघटोभवेत् सुराबिंदुसमायुक्तस्तथै
वैकादशीतिथिः हलाहलंविषंराद्धं कःपिबेन्मूढधीर्नरः दशमीशेषसंयुक्तांकउपोषतिसद्व्रती
एवंज्ञात्वामुनिश्रेष्ठदशमीशेषसंयुता वर्जितामुनिभिःसर्वैर्वासुदेवमभीप्सुभिरिति विष्णु
रहस्ये दशमीशेषसंयुक्तामुपोष्यैकादशींकिल संवत्सरकृतेनेहनरोधर्मेणमुच्यते दशमी
शेषसंयुक्तागांधार्यासमुपोषिता तस्याःपुत्रशतंनष्टंतस्मात्तांपरिवर्जयेदिति श्रीमद्व्यासः य
त्रैकादशीदशमीयुक्ताशास्त्रेप्रतिष्ठिता नैतच्छास्त्रमहंमन्येयदिब्रह्मास्वयंवदेत् इति भविष्ये

दशमीशेषसंयुक्तंनाश्रयेत्सुव्रतंव्रती तस्मादेकादशीत्याज्यादशमीपलसंयुता उपोष्याद्वाद
शीशुद्धात्रयोदश्यांतुपारणमिति तद्दशमीवेधश्चतुर्विधः तच्चोक्तंविष्णुधर्मोत्तरे गंधःसं-
गःशल्योवेधोवेधालोकेषुविश्रुताः स्पर्शादिचतुरोवेधान्वर्जयेद्वैष्णवोनरः स्पर्शःपंचचत्वा
रिंशःसंगःपंचशतामतः पंचपंचाशताशल्योवेधःषष्ट्यंशतामतइति तत्कृतेदोषमाह तत्रै-
व गांधिनीधर्महीनास्यादर्थहीनाचसंगिनी कामविध्वंसिनीशल्याविद्धामोक्षविनाशिनी
ति स्कांदेपि कलौप्राप्तेमुनिश्रेष्ठमाहावेधंचतुर्विधं साहंकारानपश्यंतिचासुरंभावमाश्रि
ताः स्पर्शादिचतुरोदोषान्नपश्यंतिनराधमाः अज्ञानतिमिरांधास्तेशुक्रमायाविमोहिता इ
ति पाद्मेपिगौतमवाक्यं सवेधोवासरोविष्णोर्यस्मिन्राष्ट्रेप्रवर्तते लिप्यतेतेनपापेनराजा
भवतिनारकी वेधंचतुर्विधंत्यक्त्वासमुपोष्यहरेर्दिनं कुलकोटिंसमुद्धृत्यनरकाद्व्रजतेदिवमि-
ति किंच चत्वारिंशद्घटिकोत्तरेषष्ट्यवधौयेविंशद्दोषास्तेषांनामानिदर्शयति श्रीमन्नारदपंच
रात्रे व्यालामुखीमहाव्यालाभयाचैषामहाभया वज्रातिवज्रारौद्राचमहारौद्रासुरीतथा वं

ध्यानैवमहावंध्याछायाग्रस्ताविधीयते वेधातिवेधाविज्ञेयामहावेधाषडाधिका प्रलयामहा
प्रलयामहाघोरातथैवच संपूर्णाराक्षसीचैवविंशद्दोषाः प्रकीर्तिता इति ननु स्पर्शादिचतु
रोवेधाःस्कप्रसिद्धाःकृतेहिवै संगादयस्त्रेतायांशल्यादिद्वापरेकलौ इति विष्णुधर्मोत्तर-
स्यैवोक्तेर्युगधर्मत्वात्कलियुगेशल्यवेधएवादरणीयः तत्संमतेनिषेधेवाक्यमपिदर्शयति
अरुणोदयवेलायांदशमीयदिसंगता अत्रोपोष्याद्वादशीस्यात्त्रयोदश्यांतुपारणमिति
पाद्मे अरुणोदयकालेतुदशमीयदिदृश्यते साविद्धैकादशीतत्रपापमूलमुपोषणमिति भ
विष्ये दशमीशेषसंयुक्तोयदिस्यादरुणोदयः नैवोपोष्यंवैष्णवेनतद्दिनेकादशीव्रतमिति
गारुडे अत्रवैष्णवपदेनवैष्णवमतमपीदंपाद्मभाविष्यगारुडवाक्यात् प्रतिवादिभिः काल
माधवादिनिबंधेषुकृतोपन्यासाच्च तस्मात्सर्ववैष्णवानामिदमेवादरणीयमितिचेन्न कुतः
पूर्वोक्तिनस्कांदवाक्यद्वयेनापिशंकायानिरस्तत्वात् किंच स्वाधिकारविशेषेणयच्छास्त्रेषु
विधीयते तदेवधर्ममित्याहुरधर्मस्तद्विपर्यय इति नारदीयवाक्याद्धर्मविपर्ययभयादपि

तन्नास्माकमादरणीयं किंच श्रुतिस्मृतिपुराणानांविरोधोयत्रदृश्यते तत्रश्रुतिःप्रमा-
णंस्यात्तयोर्द्वैधस्मृतिर्वरा इति व्यासस्मृतेः पुराणवाक्याच्छ्रुतेर्बलिष्ठत्वं ऋग्यजुःसामा
थर्वाख्यामूलरामायणंतथा भारतंपंचरात्रंचवेदाइत्येवशब्दिताइति भविष्योत्तरोक्तेः
श्रीमन्नारदपंचरात्रस्यवेदरूपत्वं तदस्माकमाग्रहस्तुतद्वाक्येसनकादिपूर्वकनारदानुया
यित्वात् श्रीनारदपंचरात्रेश्रीमन्नारदवाक्यंव्यासंप्रति चत्वारिंशद्घटीवृत्तिव्रतमेवेतिनि
र्णितं उदासभावनाहंसाअपरिग्रहधर्मिणः तेतुनित्यंव्रतंकुर्युःसंपूर्णंप्राक्किततथा किं-
चिद्भक्तोमिताशित्वंफलेन्नान्ननिषेधनात् पयसावाकृताहारःसंभवेयुःस्रुवैष्णवैः चत्वा
रिंशत्घटीवृत्तिंदशमीशमुपास्यते निष्ठितोब्रह्मचर्येणसंतत्यासहितोपिच वानप्रस्थै
र्विरागस्थैरपुत्रप्रेमवृत्तिभिः अतिवैराग्यसहितैर्गृहस्थैरपिसातथा एकचत्वारिंशत्घ
टीसंभवेद्दशमीदिनात् दोशाविंशतिकस्त्यागएषामेवनिरूपितः अन्येषांगृहसंस्थानां
हरिवासरसेवनं व्रतिनामेवतेपंचदशदोषाःसमीरिताः तेषांतुपंचचत्वारीघटीरूपंव्रतं

विदुरिति इत्यभिप्रेत्य ब्रह्मवैवर्त्तेवेदव्यासेनदर्शितं अर्द्धरात्रेतुकेषांचित् दशम्यांवेधइष्य
ते अरुणोदयवेलायांनावकाशोविचारणे कापालवेधमित्याहुराचार्य्यायेहरिप्रिया इतित
न्मेनिषेधवचनमप्याहुः निम्बार्कसंप्रदायप्रवर्तकाःश्रीमत्कुमाराः महानिशामतिक्रम्यदश
मीपरगामिनी तत्रव्रतंतुवैष्णवानकुर्वत्यस्मदाश्रया इति नारदस्तथाह निशामध्यंपरित्य
ज्यदशमीचेत्सरंगता तत्रनोपवसेत्साधुर्वैष्णवींपदवींगत इति श्रीमद्धयग्रीवः निशीथ
समयंत्यक्त्वादशमीस्यात्ततःपरा नैवोपोष्यंवैष्णवेनतद्दिनेकादशीव्रतमिति किंयत्घ
टिकामितौ पूर्वतिथौसत्यांव्रतंकुर्यादित्याकांक्षायां श्रीमदाचार्याणांसिद्धांतमाह अत्रे
दंतत्वमाज्ञेयंसारग्राहकवैष्णवैः वेधोयद्यपिचतुर्द्धाविंशद्दोषोनिषिद्ध्यते चत्वारिंशद्घ
टीकायादशम्याःपरतोबुधैः सर्वत्रसर्वथासर्वैःस्वीक्रियतेतथापिमे घटीचतुष्टयेह्याद्येन
तुवेधःकथंचन अर्द्धरात्रावलंबायकिंचित्कलिनिवर्तये इति अत्रेदमवधेयं चतुश्चत्वारिं
शद्घटिकोत्तरमितौ पूर्वतिथौसत्यांनत्तिथिस्त्याज्यातदुत्तराग्राह्या अयंविधिः सर्वत्रोपवास

विधावुत्सवविधौवा चतुश्चत्वारिघटिकानिरुक्ताविषसंसृतिः दिव्यगारुडिकाविद्यात्यागि
नांगुणहेत्वभूदिति नारदपंचरात्रवाक्योपलंभात् उभयोर्वैष्णवमतयोः परस्परविरुद्धेय
त्सिद्धांतंतदाह स्कांदेहरिः द्वयोर्विवदतोःश्रुत्वाद्वादशींसमुपोषयेत् पारणंतुत्रयोदश्या
मेषशास्त्रविनिश्चय इति मार्कंडेयेभगवांस्तथा बह्वागमविरोधेषुब्राह्मणेषुविवादिषु
उपोष्याद्वादशीशुद्धात्रयोदश्यांतुपारणमिति नारदीयेनारदः बहुवाक्यविरोधेनसंदे-
होजायतेयदा उपोष्याद्वादशीतत्रत्रयोदश्यांतुपारणमिति पाद्मेपि उदयात्प्राक्त्रिघटि
काव्यापिन्येकादशीयदा संदिग्धैकादशीनाथवर्जिताधर्मकांक्षिभिः पुत्रराज्यसमृद्ध्य-
र्थंद्वादश्यामुपवासयेत् तत्रक्रतुशतंपुण्यंत्रयोदश्यांतुपारणमिति तत्रैकादश्याधिक्ये
श्रीनारदः संपूर्णैकादशीयत्रद्वादशीवृद्धिगामिनी द्वादश्यांलंघनंकार्यंत्रयोदश्यांतु-
पारणमिति द्वादश्याधिक्येव्यासः एकादशीयदालुप्तापरतोद्वादशीभवेत् उपोष्या
द्वादशीतत्रयदीच्छेत्परमांगतिमिति उभयाधिक्येभृगुः संपूर्णैकादशीयत्रप्रभातेपुनरे

वसा सर्वैरेवोत्तराकार्यापरतोद्वादशीयदि इति यत्तु संपूर्णैकादशीयत्र परतःपुनरेवसा
पूर्वामुपवसेत्कामीनिःकामातुपराभवेत् निःकामस्तुगृहीकुर्यादुत्तरैकादशींसदा प्रातर्भ
वतुवामावाद्वादशीवाद्विजोत्तम इतिमार्कंडेये तत्त्ववैष्णवविषयकं पूर्वविद्धतिथित्यागो
वैष्णवस्यइलक्षणमिति श्रीमन्नारदपंचरात्रोक्तिविरोधात् तथा संपूर्णैकादशीयत्रप्रा
तरेवपुनश्चसा पूर्वांत्यक्त्वोत्तरांकुर्यात् काम्यकामश्चवैष्णव इतिश्रीकुमारवाक्याच्च
परमापदमापन्नेहर्षेवासमुपस्थिते सूतकेमृतकेचैवनत्याज्यंद्वादशीव्रतमिति विष्णु
रहस्ये वैष्णवलक्षणेप्येकादश्याश्चनभिहितत्वाच्च किंच सर्वाप्योदयकीग्राह्याकुलेति-
थिरुपोषणे निंबार्कोभगवान्येषांवांछितार्थप्रदायक इतिभ विष्यवचनादस्माकंनिं
बार्काणांनद्वादश्याग्रहः काम्यकामव्यवस्थापिच नन्वरुणोदयवेधोऽर्द्धरात्रवेधश्चो-
भावेववैष्णवमतंतस्माद्विद्धैकादश्यां द्वादश्यामेवव्रतंकुर्यादिति चेन्न तत्कृतेवैष्णव-
त्वहानिश्रवणात् तस्माद्द्वादश्यामेवव्रतंनत्वेकादश्यां तदुक्तंश्रीमन्नारदपंचरात्रे ए

कादश्यांनभुंजेयुर्यैतदातेप्यवैष्णवाः सैकादशीतुदशामीतत्रभोक्तव्यमाप्यते नकदाचि
च्छिवासेव्याव्रतत्वेनतुवैष्णवैः दशमीवर्द्धिताधानीव्रतिनस्तत्रभुंजते अविशुद्धाशिवाप्रो
क्तादशमीवेधसंयुता दशमीचपरिज्ञेयाशिवेचद्वादशीतदा द्वादशीचपरिज्ञेयापापनाश
नहेतवे संप्राप्तेपारणाहेतुपुण्यवृत्तित्रयोदशीति इतिनिर्णयमुक्त्वातस्याअन्वयमुखेन-
नित्यतामापादयति तावत्पापानिदेहेस्मिंस्तिष्ठंतिमनुजाधिप यावन्नोपवसेज्जंतुःपद्म
नाभदिनंशुभं अश्वमेधसहस्राणिवाजपेयायुतानिच एकादश्युपवासस्यकलांनार्हंति
षोडशीमिति नारदीयेवसिष्ठवाक्यं सर्वप्रायश्चित्तमिदंसंसारोत्तारकंपरं एकादशी
व्रतंविप्रकुर्वन्मुक्तिमवाप्नुयात् इति ब्रह्मवैवर्ते प्रसंगादथवादंभाल्लोभाद्वात्रिदशाधि
प एकादश्युपवासेनसद्यएवसुखीभवेदिति कुमाराः एकतःपृथिवीदानमेकतोहरि
वासरः नसमंकविभिःप्रोक्तंवासरोह्यधिकःस्मृत इतिस्कांदे एकादशीव्रतंयस्तुभक्ति
मान्कुरुतेनरः सयातिपरमंस्थानंयत्रदेवोहरिःस्वयं इतिआग्नेये ओंकारःसर्ववेदानां

यथैवाद्यःप्रपूजितः नथासर्वव्रतानांचद्वादशीव्रतमुत्तमं इतिवैष्णवे व्यतिरेकेणापितन्नि-
त्यतांदर्शयति यानिकानिचपापानिब्रह्महत्यासमानिच अन्नमाश्रित्यतिष्ठंतिसंप्राप्तेहरि
वासरे रटंतीहपुराणानिभूयोभूयोवरानने नभोक्तव्यंनभोक्तव्यंसंप्राप्तेहरिवासरे व
रंस्वमातृगमनंवरंगोमांसभक्षणं वरंहत्यासुरापानंनैकादश्यांतुभोजनं पितावायदि
वापुत्रोभार्यावापिसुहृत्तमः पद्मनाभदिनेभुंक्तेविप्राद्योदस्युवदूवेदिति नारदीये स
केवलमघंभुंक्तेयोभुंक्तेहरिवासरे दिनेत्रसर्वपापानिभवंत्यन्नास्थितानितु तानिमोहेनयो
श्नातिनसपापैर्विमुच्यते इतिब्रह्मवैवर्ते हरिवासरलक्षणं विष्णुधर्मोत्तरेऽभिहितं द्वादश्ये
कादशीयोगेविख्यातोहरिवासरः एकादश्यंतपादेनद्वादश्याःपूर्वमेवहि हरिवासरमि
त्याहुर्भोजनंनसमाचरेदिति स्मृतौश्रीमन्नारदः द्वादश्येकादशीतिथौपूर्वोत्तरस्वपादतः
संगतेक्रमतोज्ञेयोहरिवासरनिश्चयइति अथद्वादशीसाष्टविधा तन्नामानि ब्रह्मवैव-
र्तेऽभिहितानि उन्मीलिनीवंजुलिनीत्रिस्पृशापक्षवर्द्धिनी जयाचविजयाचैवजयंतीपाप

नाशिनी द्वादश्यांष्टौमहापुण्यासर्वपापहराद्विजा इति उन्मीलिनीलक्षणंपाद्मे एकादशी
तुसंपूर्णावर्द्धतेपुनरेवसा द्वादशीनचवर्द्धेतकथितोन्मीलिनीतिसा वंजुलीलक्षणमपिपा
द्मे संपूर्णैकादशीयत्रद्वादशीचतथाभवेत् त्रयोदश्यांमुहूर्तार्द्धंवंजुलीसाहरिप्रिया शु
क्लपक्षेथवाकृष्णेयदाभवतिवंजुली एकादशीदिनेभुक्त्वाद्वादश्यांकारयेद्व्रतं त्रिस्पृशा
लक्षणंतुश्रीनारदआह एकादशीद्वादशीचरात्रिशेषेत्रयोदशी त्रिस्पृशानामसाप्रोक्ता
ब्रह्महत्यांव्यपोहतीति पक्षवर्द्धिनीलक्षणंब्रह्मवैवर्ते कुहूराकेयदावृद्धिंप्रयातेपक्षवर्द्धि
नी विहायैकादशींतत्रद्वादशींसमुपोषयेत् इति अत्रायमभिसंधिः यद्यपिदशमीवेधो
नास्तितथापिपक्षवेधस्यविद्यमानत्वादेकादशीत्याज्या जयाविजयाजयंतीपापनाशि-
नीनांमाहात्म्यंलक्षणंचब्राह्मेऽभिहितं जयाचविजयाचैवजयंतीपापनाशिनी सर्वपाप
हराह्येताःकर्त्तव्याःफलकांक्षिभिः द्वादश्यांतुसितेपक्षेयदाऋक्षंपुनर्वसु नाम्नासातुज
याख्यातातिथीनामुत्तमातिथिः यदातुशुक्लद्वादश्यांनक्षत्रंश्रवणंभवेत् विजयासा

तिथिःप्रोक्तातिथीनामुत्तमातिथिः यदातुशुक्लद्वादश्यांप्राजापत्यंप्रजायते जयंतीनाम
साप्रोक्तासर्वपापहरातिथिः यदातुशुक्लद्वादश्यांपुष्यंभवतिकर्हिचित् तदासातुमहा-
पुण्याकथितापापनाशिनी इति यत्तु वानप्रस्थोयतिश्चैवशुक्लामेवसदागृहीति कौर्मे
मतमुपन्यस्तंतत्त्ववैष्णवविषयंतदकरणेप्रत्यवायश्रवणात् वैष्णवलक्षणविरोधाच्च य
थाशुक्लातथाकृष्णायथाकृष्णातथेतरा तुल्येनमन्यतेयस्तुसहिवैष्णवउच्यते इतितत्व
सागरे गृहस्थोब्रह्मचारीचआहिताग्निस्तथैवच एकादश्यांनभुंजीतपक्षयोरुभयोर
पीत्याग्नेये सपुत्रश्चसभार्यश्चस्वजनैर्भक्तिसंयुतः एकादश्यामुपवसेत्पक्षयोरुभयो
रपि सब्रह्महास्तेयस्पश्चकृतघ्नोगुरुतल्पगः विवेचयतियोमोहादेकादश्यौसितासिते
इति विष्णुधर्मोत्तरे सर्वेषामिहपापानामाश्रयःसतुकीर्तितः विवेचयतियोमोहादेकाद
श्यौसितासिते इतिकालिकापुराणे शुक्लावायदिवाकृष्णाविशेषोनास्तिकश्चन विशेषंकु
रुतेयस्तुपितृहासतुकीर्तितः इतिगारुडे किंच संक्रांतौकृष्णपक्षेतुरविशुक्रदिनेतथा

एकादश्यांनकुर्वीतह्युपवासंनपारणमित्येतदप्यवैष्णवविषयं संक्रांतौरविवारेवायदाप्ये
कादशीभवेत् उपोष्यासामहापुण्यासर्वपापहरातिथिरितिकात्यायनस्मृत्युक्तेः परमा
पदमापन्नेहर्षेवासमुपस्थिते नैकादशींत्यजेद्यस्तुतस्यदीक्षास्तिवैष्णवी एवंकुर्वन्नरो
भक्त्याविष्णुसायुज्यमाप्नुयात् अन्यथाकुरुतेयस्तुसयातिनरकेध्रुवमितिस्कांदोक्तेश्च
कियद्वर्षादुत्तरंकियद्वर्षावधावकरणेप्रत्यवायइत्याकांक्षायामाह अष्टवर्षाधिकोम-
र्त्योह्यपूर्णाशीतिवत्सरः भुंक्तेयोमानवोमोहादेकादश्यांसपापभागिति स्कांदेश्रीनार
दः अष्टवर्षाधिकोमर्त्योह्यशीतिर्नहिपूर्यते योभुंक्तेमामकेराष्ट्रेविष्णोरहनिपापकृत्
समेवध्यश्चदंड्यश्चनिर्वास्योविषयाद्बहिरिति नारदीयेमुचकुंदः ननु षड्भिर्मासोपवा
सैश्चयत्फलंपरिकीर्तितं विष्णोर्नैवेद्यशिक्थेनतत्फलंभुंजतांकलावित्यादिवाक्येनफ-
लाधिक्यात् नैवेद्यशिक्थग्रहणाच्चैकादश्यामपि विष्णोःप्रसादान्नस्यभोक्तव्यंप्राप्तमि
तिचेन्न प्रसादान्ननिषेधविशेषवाक्यश्रवणात्तत्त्वन्यदिवसविषयंनत्वेकादश्याः तन्नि

षेधवाक्यंदर्शयति प्रसादान्नंसदाग्राह्यमेकादश्यांननारद रक्षादिसर्वदेवानांमनुष्याणां
तुकाकथा इतिमहाभारतेश्रीकृष्णवचनं वैष्णवोयदिभुंजीतत्वेकादश्यांप्रसादधीः वि
ष्णोरर्च्चावृथातस्यनरकंघोरमाप्नुयात् इतिश्रीनारदवचनंच ननु पारणेमरणेनृणांति
थिस्तात्कालिकीस्मृतेति नारदीयेवसिष्ठवाक्यादेकादश्यामपिपितृश्राद्धेप्राप्तेश्राद्धंक
र्त्तव्यमितिचेन्न तत्रयाणांनरकसाधकत्वात्त्याज्यमेव तदुक्तंब्रह्मवैवर्त्ते येकुर्वंतिमही
पालश्राद्धमेकादशीदिने त्रयस्तेनरकंयांतिदाताभुक्पितरस्तथाइति ननु तर्हिश्राद्ध
लोपःस्यात्किमितिचेदुच्यते एकादश्यांयदारामश्राद्धंनैमित्तिकंभवेत् तद्दिनंतुपरित्य
ज्यद्वादश्यांश्राद्धमाचरेदिति पाद्मे एकादश्यांतुप्राप्तायांमातृपित्रोर्मृताहनि द्वादश्यां
तत्प्रदातव्यंनोपवासदिनेक्वचित् गर्हितान्नंचनाश्नंतिपितरश्चदिवौकस इतितत्रैवोत्तर-
खंडे एकादशीयदानित्याश्राद्धंनैमित्तिकंभवेत् उपवासंतदाकुर्याद्द्वादश्यांश्राद्धमाचरेदिति
स्कांदे पित्रोःश्राद्धंप्रकुर्वीतनैकादश्यांद्विजोत्तम द्वादश्यांतत्प्रकुर्वीतनोपवासदिनेक्वचि

दिति हारीतस्मृतौ यत्तु उपवासोयदानित्यःश्राद्धंनैमित्तिकंभवेत् उपवासंतदाकुर्यादा-
घ्रायपितृसेवितमिति वाराहे उक्तं तत्त्ववैष्णवविषयं तच्चोक्तंश्रीनारदेन कव्यमाघ्रायकु
र्वंतिवैष्णवागमवर्जिताः पापान्नैःपितृवंचकास्त्वेकादश्यांनवैष्णवा इति किंच यएवं
मुनिशार्दूलशोधयित्वादिनत्रयं करोतिकारयित्वातुजानीहिसोच्युतःस्वयमिति स्कांदो-
क्तेस्तिथित्रयशोधनस्यावश्यकत्वाद्दशम्यांनवमीवेधेप्येकादशीत्याज्या तच्चोक्तंपाद्मे
नवमीदृश्यतेचापिदशमीनैवदृश्यते उपोष्याद्वादशीशुद्धात्रयोदश्यांतुपारणमिति इत्ये
वाभिप्रेत्यश्रीमन्नारदपंचरात्रे दशमीदूषितेशुद्धंसंपूर्णंदेहदूषणं तस्माच्छुद्धासमारा-
ध्यादेहशुद्धिविधायिनी इति शोधनविवेकमुक्त्वातन्नियमानाह कांस्यंमांसंमसूरंच-
क्षौद्रंचानृतभाषणं पुनर्भोजनमध्वानंदशम्यांदशवर्जयेदिति स्कांदेतथाश्रीनारदः
कांस्यंमांसंमसूरंचपुनर्भोजनमैथुनं द्यूतमत्यंबुपानंचदशम्यांसप्तवर्जयेदिति तथामा
त्स्ये कांस्यंमांसंस्कराक्षौद्रंतैलंवितथभाषणं व्यायामंचप्रवासंचदिवास्वापंचमैथुनम्

शिलापिष्टंमसूरंचद्वादशैतानिसंत्यजेत् दशम्यामेकभुक्तंचकुर्वंतिविजितेंद्रिया इति तथा
नारदीयेरुक्मांगदः अष्टवर्षाधिकोबालोह्यशीतिर्नहिपूर्यते योभुंक्तेमामकेराष्ट्रेदंड्योसौद
स्युवद्भवेत् प्रातर्हरिदिनंलोकास्तिष्ठध्वंचैकभोजनाः अक्षारगणाःसर्वेहविष्यान्ननिषेव-
णाः अवनीतल्पशयनाःप्रियासंगविवर्जिताः स्मरध्वंदेवदेवेशपुराणंपुरुषोत्तमं सकृद्भो
जनसंयुक्ताद्वादश्यांचभविष्यथ इति क्षारगणःस्मृतौ तिलमुद्गादृतेशिल्यंशस्यंगोधूम
कोद्रवाः चर्मकंदेवधान्यंचएषक्षारगणःस्मृत इति हविष्यान्नं पाद्मे हैमंतिकंसिताश्विन्यं
धान्यंमुद्गास्तिलायवाः कलायकंगुनीवारावास्तुकंहिलमोचिका षष्टिकाकालशाकंचमू
लकंकमुकेतरत् कंदःसैंधवसामुद्रेलवणेदधिसर्पिषी पयोऽनुद्धृतसारंचपनसाम्रह-
रीतकी पिप्पलीजीरकंचैवनागरंगकचिंचिणी कदलीलवलीधात्रीफलान्यगुडमैक्षवम्
अतैलपक्वंमुनयोहविष्यान्नंप्रचक्षते इति किंच गृह्णीयान्नियमंपूर्वंदंतधावनपूर्वकं नि
यमात्फलमाप्नोतिनश्रेयोनियमंविना इतिस्कांदोक्तेर्नियमस्यावश्यकत्वान्नियमविधिंदर्श

यतितद्वाक्येन आदौगुरुगृहेगत्वापश्चान्नियममाचरेत् स्वशिरःपादयोःकृत्वापादौस्पृ-
ष्ट्वाचमौलिना कृतांजलिपुटोभूत्वाश्रीगुरुंप्रार्थयेत्ततः नियमंदेहिभोस्वामिन्नेकादश्यां
ममप्रभो इतिगुरूक्तमंत्रेणस्वीकुर्यान्नियमंसुधीरिति संकल्पोमंत्रः दशमीदिनमारभ्य
करिष्येहंव्रतंतव त्रिदिनंदेवदेवेशनिर्विघ्नंकुरुकेशव इतिदशमीकृत्यमुक्त्वाएकादशीकृ
त्यमाह उपवासेतथाश्राद्धेनखादेद्दंतधावनम् दंतानांकाष्ठसंयोगेहंतिसप्तकुलानिवै इति
स्कांदेनिषेधवाक्यं अलाभेवानिषेधेवाकाष्ठानांदंतधावनं पर्णादिनाविशुद्ध्येतजिव्हो
ल्लेखःसदैवहि इतिस्मृतौविधिवाक्यंच तद्द्वयमप्यवैष्णवविषयं वैष्णवविषयेतुकाष्ठे
नदंतधावनस्यनित्यत्वात्तदकृतेभगवत्पूजनानधिकारत्वाच्च तच्चोक्तंवाराहेश्रीहरिणा
दंतकाष्ठमखादित्वायोमांसमुपसर्पति सर्वकालकृतंकर्मतेनैकेनचनश्यति रात्रिंनयेत्ततः
पश्चात्प्रातःस्नायात्समाहितः उपवासंतुसंकल्प्यमंत्रपूतंजलंपिबेदिति स्कांदोक्त्या साधा
रणक्रमोदर्शितः विशेषतःश्रीकृष्णार्चकस्यक्रमंदर्शयति श्रीमार्कंडेये अष्टाक्षरेणमंत्रेणात्रि

जप्तेनाभिमंत्रितम् उपवासफलप्रेप्सुः पिबेत्तोयंसमाहितः कृष्णार्चनंततः कृत्वापुष्पांज-
लिमथापिवा संकल्पमंत्रमुच्चार्यदेवायविनिवेदयेत् संकल्पमंत्रः एकादश्यांनिराहारो
भोक्ष्येहंद्वादशीदिने निवेदयामिदेवेशानिर्विघ्नंकुरुकेशवेति विद्धैकादश्यांतुदशमी
कृत्यंसंकल्प पूजनादिकंकुर्यान्नित्वेकादशीकृत्यंतस्मिन्तन्निषेधश्रवणात् तच्चोक्तं
श्रीमच्चतुःसनेन दशम्याःसंगदोषेणचार्द्धरात्रात्परेणतु वर्जयेच्चतुरोयामान्संकल्पा-
र्चनयोःसदेति तथानारदीयेश्रीनारदेन पूर्वयाःसंगदोषेणैकादश्याःस्नानपूजने व
र्जयंतिनिशःपूर्वान्यामांश्चचतुरोद्विजाः तदूर्ध्वंस्नानपूजादिकर्तव्यंतदुपोषितैरितिस्ना
नकरणविधिस्तुदेवलेनदर्शितः गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृ
ह्णीयाद्यद्वासंकल्पयेद्बुधः इति उपवासस्वरूपमाह वृद्धवसिष्ठकात्यायनविष्णुधर्मो
त्तरेषु उपावृत्तस्यपापेभ्योयस्यवासोगुणैःसह उपवासःसविज्ञेयोनोपवासस्तुलंघना
दिति वर्जनीयानिचतत्रैव विहितस्याननुष्टानमिंद्रियाणामनिग्रहः निषिद्धसेवनंनि

त्यंवर्जनीयंप्रयत्नतइति गुणास्तुविष्णुधर्मोत्तरे तज्जप्यंतज्जपध्यानंतत्कथाश्रवणादि
कं तदर्चनंचतन्नामकीर्तनश्रवणादयः उपवासकृतोह्येतेगुणाःप्रोक्तामनीषिभिः उपवासी
हरिंयस्तुभक्त्याध्यायतिमानवः तज्जप्यजापीतत्कर्मरतस्तद्गतमानसः निष्कामोदैत्यव
द्ब्रह्मपदमाप्नोत्यसंशयइति व्रतदूषकानिकुमाराश्चाहुः असकृज्जलपानाच्चसकृत्तांबू
लभक्षणात् उपवासोविदुष्येतदिवास्वापाच्चमैथुनादिति तथादेवलः ब्रह्मचर्यमहिंसा
चसत्यमामिषवर्जनम् व्रतेचैतानिचत्वारिचरितव्यानिनित्यशः अदूषकानिव्यासः पुष्पालं
कारवस्त्राणिगंधकल्कानुलेपनम् उपवासेनदुष्येतदंतधावनमार्जनमिति व्रतोपयोगीनिम
हाभारते अष्टौतान्यव्रतघ्नानिआपोमूलंफलंपयः हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषध
मिति तत्ररात्रौजागरणंकुर्यात् तदुक्तंब्रह्मांडे एकादश्यांजनोविष्णोरात्रौपूजांस्वभक्तितः
कुर्याज्जागरणंविष्णोःपुरतोवैष्णवैःसहेति जागरणलक्षणंतुस्कांदे शृणुनारदवक्ष्यामि-
जागरणस्यहिलक्षणं येनविज्ञानमात्रेणदुर्लभोनजनार्दनः गीतंवाद्यंचनृत्यंचपुराणप

ठनंतथा धूपंदीपंचनैवेद्यंपुष्पंगंधानुलेपनं फलमर्घ्यंचश्रद्धाचदानमिंद्रियसंयमम् सत्वा
न्वितंविनिंद्रंचसुदान्वितंक्रियान्वितम् साश्चर्यंचसहोत्साहंपापालस्यादिवर्जितम् प्रदक्षि
णासुसंयुक्तंनमस्कारंपुरःसरम् नीराजनसमायुक्तमनिर्विण्णेनचेतसा यामेयामेमहाभागं
कुर्यादाराात्रिकंहरेः षड्विंशगुणसंयुक्तमेकादश्यांतुजागरम् यःकरोतिनरोभक्त्यानपुनर्जा
यतेभुवि इति तस्यान्वयमुखेनकर्तव्यंदर्शयति स्तुवंतिचप्रशंसंतिजागरंचक्रधारिणः
नित्योत्सवोभवेत्तेषांजन्मानिदशपंचचेति ब्रह्मांडे अलाभेवाचकस्याथगीतंनृत्यंतु-
कारयेत् वाचकेसतिदेवेशिपुराणंप्रथमंपठेत् अश्वमेधसहस्रस्यवाजपेयायुतस्यच पु
ण्यंकोटिगुणंगौरिविष्णोर्जागरणेकृते पितृपक्षेमातृपक्षेभार्यापक्षेचभामिनि कुला-
न्युद्धरतेतानिकृतेजागरणेहरेः ब्राह्म्यंपदंमदीयंचसत्यंवैतस्यवैष्णवं यःप्रबोधयतेलो
कान्विष्णोजागरणेरतः मतिंप्रयच्छतेयस्तुहरेर्जागरणंप्रति षष्टिवर्षसहस्राणिश्वेत
द्वीपेवसेन्नरः यत्किंचित्क्रियतेपापंसप्तजन्मनिमानवैः कृष्णस्यजागरेसर्वंरात्रौदहति

पार्वति यावत्पादानिकुरुतेकेशवायतनंप्रति अश्वमेधसमानिस्युर्जागरार्थंप्रपद्यतः पा
दयोःपतितंयावद्धरायाःपांसुगच्छतां तावद्वर्षसहस्राणिजागरीवसतेदिवि तस्माद्गृहा
त्प्रगंतव्यंजागरेमाधवस्यतु गवांकोटिसहस्राणिस्वर्णमेरुशतानिच दत्वायत्फलमाप्नो
तितत्फलंजागरेहरेरितिब्रह्मांडे ब्राह्म्येपिशिवः द्वादश्यांजागरेविष्णोर्यैःकृतंपुष्पमंडपम्
प्रतिपुष्पंफलंतेषांवाजिमेधसमंप्रिये द्वादश्यांकृष्णभवनंकदलीस्तंभशोभितम् येकुर्वंति
हरिस्तेषांस्वकीयंयच्छतेपदम् दीपदानंप्रकुर्वंतिजागरेकेशवस्यहि तेध्वस्ततिमिरंगौरि
यांतिविष्णोःपरंपदम् अप्रेरितःस्वयंभक्त्यागीतंनृत्यंकरोतियः जागरेपद्मनाभस्यप्रे-
रितद्विगुणंफलं कुर्वंतिमुनयोनित्यमृषयोदेवतादयः जागरंपद्मनाभस्यकिन्नकुर्व
न्तिमानवाः योनृत्यतिप्रहृष्टात्माकृत्वाथैकरताडनम् गीतंकुर्वन्मुखेनापिदर्शयन्कौतु-
कान्बहून् पुरुतोवासुदेवस्यरात्रौजागरणेस्थितः दर्शयन्विविधान्नृत्यान्स्वेच्छालापा
न्करोतिवै भावैस्तैस्तैर्नरोयस्तुकुरुतेजागरेहरेः निमिषेनिमिषेपुण्यंतीर्थकोटिसमंस्मृ

तमित्यादि तथाप्रल्हादसंहितायां यानिकानिचपापानिब्रह्महत्यादिकानिच कृष्णजागरणेतानिविलयंयांतिखंडशः इति अन्वयमुक्त्वाव्यतिरेकंदर्शयति ब्रह्मांडेब्रह्मा स्तुवंति नप्रशंसंतियेनराजागरंहरेः नोत्सवश्चभवेत्तेषांगृहेजन्मनिसप्तचेति तथास्कांदेशिवः प्रयात्येकादशीयेषांकलौजागरणंविना तेविनष्टानसंदेहोयस्माज्जीवितमध्रुवं उद्धृतं नेत्रयुग्मंचदत्वावैहृदयेपदम् अंतकालेयमालयेतेषांदूतैर्भविष्यति कृतंयेनैवपश्यंतिपापिनोजागरंहरेः मूकवत्तिष्ठतेयोवैगानंपाठंकरोतिन सप्तजन्मनिजायंतेमूकास्तुजागरेहरेः पंगुत्वंतस्यजानीयात्सप्तजन्मनिपार्वति योननृत्यतिमूढात्मापुरतोजागरेहरेः संप्राप्तेवासरेविष्णोर्येनकुर्वंतिजागरम् भ्रश्यतेसुकृतंतेषांवैष्णवानांचनिंदया कामार्थसंपदःपुत्रकीर्तिर्लोकाश्चशाश्वताः यज्ञायुतैर्नलभ्यंतेद्वादशीजागरंविना मतिर्नजायतेयस्यद्वादश्यांजागरंप्रति नहितस्याधिकारोस्तिपूजनेकेशवस्यतु प्रवासेनत्यजेद्यस्तुपथिखिन्नोपिपार्वति जागरंवासुदेवस्यद्वादश्यंचसमेप्रियइत्यादि विद्धैकाद

श्यांतुदशमीनिमित्तोत्सवंकर्तव्यं नत्वेकादशीनिमित्तपूजनजागरणादिकं तत्कृतेतद्दैफ
ल्यश्रवणात् तच्चोक्तंस्कांदेशिवेन उपोषणदिनेविद्धेजागरैःपूजनंहरेः वृथादानादिकंस
र्वंकृतघ्नेसुकृतंयथा उपोषणदिनेविद्धेप्रारंभेजागरेसति विहायस्थानंतत्कृष्णः शापंद
त्वाप्रगच्छति अविद्धेवासरेविष्णोर्येकुर्वंतिप्रजागरं तेषांमध्येप्रहृष्टःसन्नृत्यंतुकुरुतेह
रिरित्यादि तत्रजागरणेदर्शनाधिकारिणोदर्शयति तत्रब्रह्माशिवश्चेंद्रः शक्राद्यादेवता
गणाः नित्यमेवसमायांतिजागरेकृष्णवल्लभे ऋषयोदेवताद्यास्तुव्यासाद्यामुनयस्त
था अहंतत्रप्रगच्छामिकृष्णपूजारतःसदा तत्रकाशीपुष्करंचप्रयागंनैमिषंगया शालि
ग्राममहाक्षेत्रमर्बुदारण्यमेवच सौकरंमथुरातत्रसर्वतीर्थानिचैवहि एकादश्यांद्विज-
श्रेष्ठागच्छंतेकृष्णजागरे इत्यादिब्रह्मांडेशिववाक्यंजागरणाधमंदर्शयति परापवादयु
क्तंतुमनःप्रशमवर्जितं शास्त्रहीनंचगांधर्वंतथादीपविवर्जितम् शक्त्युपचाररहितमु
दासीनंसनिद्रकं कलियुक्तंविशेषेणजागरंनवधाधममितितत्रैव जागरणोत्तमंचतत्रैव

सशास्त्रजागरंयच्चनृत्यगांधर्वसंयुतं सवाद्यंतालसंयुक्तंसदीपंसाधुभिर्युतं उपचारैश्चसं
युक्तंयथोक्तैर्भक्तिभाविते: मनःसंतुष्टिजननंसमुदंलोकरंजनं गुणैरुरुभिरपापैस्तीर्थ-
वासेनतस्यकिमित्यादि अत्रवर्णाश्रमाणांसामान्येनविशेषेणवाधिकारः इत्याकांक्षाया
माह तन्माहात्म्यद्योतकवाक्येषुविशेषवर्णाद्यऽनभिहितत्वात्तत्रसर्वेषामेवाधिकारः त
दुक्तोब्राह्मे ब्राह्मणाःक्षत्रियावैश्यास्त्रियःशूद्राश्चजागरे हीनवर्णांत्यजाश्चैवराक्षसादै
त्यदानवाः प्राप्तास्तेपरमंस्थानंश्रीविष्णोर्जागरेकृते इति इत्येकादशीकृत्यं अथद्वादशी
कृत्यमाह प्रातःस्नात्वाहरिंपूज्यउपवासंसमर्पयेत् अज्ञानतिमिरांधस्यव्रतेनानेनकेशव
प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव पारणंतुततःकुर्याद्यथासंभवमग्रतः अतऊर्ध्वंय
थेष्टंवैविचरेत्तुयथारुचि इतिकात्यायनस्मृतौ यद्यतिन्ह्रस्वेवृध्दौवाद्वादश्यांसत्यांतदाक
यारीत्यापारणंकर्तव्यमित्याकांक्षायांनारासिंहवाक्येनतद्रीतिंदर्शयति अल्पायामथवि
प्रेंद्रद्वादश्यामरुणोदये स्नानार्चनक्रियाकार्यादानहोमादिसंयुता त्रयोदश्यांतुशुद्धा

यांपारणेपृथिवीफलं सर्वयज्ञाधिकंवापिनरःप्राप्नोत्यसंशयः एतस्मात्कारणाद्विप्र
प्रत्यूषेस्नानमाचरेत् पितृतर्पणसंयुक्तंस्वल्पांद्दस्यैव द्वादशीमित्यादि यदिकिंचित्त्रयोद
श्यांद्वादशीचोपलभ्यते द्वादश्यांपारणंतत्रवर्जयित्वात्रयोदशीमिति श्रीमत्कुमारोक्ते
द्वादश्यांकिंचिद्विद्यमानायांपारणंतदारात्रावेवस्नानादिकंकर्तव्यं तत्संमतत द्वाक्यंदर्शि
यति दिनकर्मदिनेसर्वंकर्तव्यंयदितद्दिनम् नैवसिद्धिमवाप्नोतितदारात्रौविधीयते
इत्यादिशारदापुराणे अत्रश्रीमदाचार्याणांसिद्धांतमाह एकादशीव्रतेविद्धे कश्चिद्वाद्वाद
शीव्रते किंचिच्छिष्टत्रयोदश्यांनद्वादशीमतिक्रमेदिति अयमेवभविष्ये श्रीवेदव्यासे
नदृढीकृतः सर्वाप्यौदयिकीग्राह्याकुलेतिथिरुपोषणे निंबार्कोभगवान्येषांवांछि-
तार्थप्रदायक इतिद्वादश्याअभावेतुनारसिंहोक्तवाक्यमेवसंगच्छते त्रयोदश्यांतु-
शुद्धायांपारणेपृथिवीफलम् सर्वयज्ञाधिकंवापिनरःप्राप्नोत्यसंशय इति अत्रनिषेधो
ब्रह्मांडे कांस्यंमांसंस्कुराक्षौद्रंलोभंवितथभाषणम् व्यायामंचप्रवासंचदिवास्वप्नमथां

जनम् शिलापिष्टंमसूरंचद्वादशैतानिवैष्णवः द्वादश्यांवर्जयेन्नित्यंसर्वपापैःप्रमुच्यते इ
ति सायमाद्यंतयोरन्होःसायंप्रातस्तुमध्यमे उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयमिति-
स्कांदोक्तेरुक्तनिषेधांश्चवर्जयित्वापारणंकुर्यात् इतिद्वादशीकृत्यं श्रीभानुनंदिनींश्या
मांकिशोरंनंदनंदनम् तदंघ्रिदास्यलाभायवंदेहंकरुणामयम् १ इतिश्रीमत्परमवैष्ण
वाचार्यश्रीमन्निंबादित्यमतानुयायिश्रीमत्तुलारामाभिधाविदितचरणचिंतकेनधनी-
रामेणकृतायांनैर्ब्यव्रतसिद्धांतज्योत्स्नायांद्वादशव्रतोत्सवसामान्यविधिर्नामपूर्वोल्ला
सःसमाप्तः ७ नत्वाचराधिकांकृष्णंगुरुंगुरुपरंपराम् मासानांसुविधिर्यत्रद्वि
तीयोल्लासमारभे १ तत्रश्रीमद्राधादामोदरात्मकयुगलार्चनस्यविशेषत्वात्सर्वमास
फलाधिक्यान्निंबार्कानुयायिनांसुवैष्णवानांप्रमोदकत्वाच्चतावत्कार्तिक्यकृत्यमनुव
र्णयति कार्तिकेतुविशेषेणकृष्णभक्तोयजेद्धरिम् श्रीराधायास्तथासेवामिच्छन्भ-
क्तोभजेच्चतामित्यर्थपंचकेश्रीमदाचार्यवर्याणामुक्तिः तद्व्रतस्यनित्यतांव्यतिरेकमुखे

नदर्शयति दुष्प्राप्यंमानुषंजन्मकार्तिकोक्तेचरेन्नहि धर्मंधर्मभृतांश्रेष्ठसगच्छेन्नरकंध्रु
वम् नियमेनविनाविप्रकार्तिकंयःक्षिपेन्नरः कृष्णःपराङ्मुखस्तस्ययस्मादूर्जोस्यवल्ल
भः सब्रह्महासगोघ्नश्चस्वर्णस्तेयीमहानृती नकरोतिमुनिश्रेष्ठयोनरःकार्तिकेव्रतम्
व्रतंतुकार्तिकेमासियदानकुरुतेगृही इष्टापूर्तादिकंनश्येद्यावदाभूतनारकी यतिश्च
विधवान्चैवविशेषेणत्वनाश्रमी कार्तिकेनरकंयातिह्यकृत्वावैष्णवव्रतम् पापपुंजाःक
लौज्ञेयानतेमर्त्यामहामुने वैष्णवाख्यंव्रतंयैस्तुनकृतंकार्तिकेशुभे सप्तजन्मार्जितंपुण्यं
वृथाभवतिनारद अकृत्वाकार्तिकेमासेवैष्णावव्रतमुत्तमं इतिस्कांदेव्यतिरेकमुक्त्वात-
न्माहात्म्यंचान्वयमुखेनदर्शंति एकतःसर्वतीर्थानिसर्वयज्ञाःसदक्षिणाः कार्तिकस्य-
तुमासस्यकोट्यंशमपिनार्हंति स्वर्णमेरुतुल्यानिसर्वदानानिचैकतः एकतःकार्ति-
कोवत्ससर्वदाकेशवप्रियः यत्किंचित्क्रियतेपुण्यंविष्णुमुद्दिश्यकार्तिके तदक्षयंभवेत्स
र्वंसत्योक्तंतवनारद वाराणस्यांकुरुक्षेत्रेनैमिषेपुष्करेर्बुदे गत्वाफलंयदाप्नोतिव्रतंकृ-

त्वातुकार्तिके इतिस्कांदे तत्रकर्तव्यंदर्शयति स्कांदे साधुसेवागवांग्रासः कथाविष्णोस्त
थार्चनम् जागरंपश्चिमेयामेदुर्लभंकार्तिकेकलौ मालतीकेतकीपत्रंतुलसीद्विविधामुने द
दातिकार्तिकेमासिदीपदानमहर्निशं दुर्लभंवैष्णवंशास्त्रंवैष्णवैःसहसत्कथा जन्मको
टिसहस्रैस्तुमानुष्यंप्राप्यदुर्लभं कार्तिकेचार्चितोविष्णुस्त्यक्तांतेयमयातनम् संनिह
त्यकुरुक्षेत्रेराहुग्रस्तेदिवाकरे सूर्यवारेणयःस्नातितदेकाहेनकार्तिके तुलसीपत्रलक्षे-
णकार्तिकेयोर्चयेद्धरिम् पत्रेपत्रेमुनिश्रेष्ठमौक्तिकंलभतेफलं यःपठेत्प्रयतोनित्यंश्लो
कंभागवतंमुने अष्टादशपुराणानांकार्तिकेफलमाप्नुयात् मालतीमालयायेनकार्ति
केपुष्पमंडपम् कृतंविष्णुगृहेरम्यंपरमंविहितंफलम् अगस्त्यकुसुमैर्देवंयेर्चयंति-
जनार्दनम् देवर्षेदर्शनात्तेषांनरकाग्निःप्रशाम्यति तुलसीदलपुष्पाणियेयच्छंतिजना
र्दने कार्तिकेसकलंवत्सपापंजन्मायुतंदहेत् दृष्टास्पृष्टाथवाध्याताकीर्तितानमितास्तुता
रोपितासिंचितानित्यंपूजितातुलसीशुभा नवधातुलसीभक्तिंयेकुर्वंतिदिनेदिने युगकोटि

सहस्राणितेवसंतिहरेर्गृहे कार्तिकेपश्चिमेयामस्तवगानंकरोतियः वसतेश्वेतद्वीपेतुपितृ
भिःसहनारद विष्णोर्नैवेद्यदानेनकार्तिकेशिक्थसंख्यया युगानिवसतेस्वर्गेतावंतिमु
निसत्तम प्रदक्षिणांयःकुरुतेकार्तिकेविष्णुसद्मनि पदेपदेऽश्वमेधस्यफलभागीभवे
न्नरः कुरुतेदंडवन्नतिंकार्तिकेभक्तिभावितः रेणुसंख्यावसेत्स्वर्गेमन्वंतरशतंनरः गी
तवाद्यंचनृत्यंचकार्तिकेपुरतोहरेः यःकरोतिनरोभक्त्यालभतेचाक्षयंपदम् बहुवर्तिसमा
युक्तंज्वलंतंकेशवोपरि कुर्यादारात्रिकंयस्तुकल्पकोटिदिवंवसेत् मामूढगच्छमथुरांमा
प्रयातंतथार्बुदं दीपदानेनदेवस्यसर्वंफलमवाप्स्यसि कार्तिकेदीपदानेनयस्तोषयतिके
शवम् घृतेनदीपकोयस्तुतिलतैलेनवापुनः ज्वलतेमुनिशार्दूलह्यश्वमेधैस्तुतस्यकिम्
सरोरुहाणितुलसीमालतीमुनिपुष्पकम् कार्तिकेदीपदानंचसर्वदाकेशवप्रियम् योद
दातिगवांकोटिंसवत्सांक्षीरसंयुताम् हरेःशिखरदीपस्यकलांनार्हतिषोडशीम् दीप
पंक्तेश्चरचनांसबाह्याभ्यंतरंहरेः विष्णोर्विमानेकुरुतेसनरःशंखचक्रधृक् दिविदे

वानिरीक्षंतेविष्णुदीपप्रदंनरम् कदाभविष्यत्यस्माकंसंगमःपूर्वकर्मणा इति कर्तव्यमु
क्त्वाव्यतिरेकान्वयाभ्यांहेयत्वंचदर्शयति स्कांदे परान्नंपरवस्त्रंचपरवादंपरांगनाम्
सर्वदावर्जयेत्प्राज्ञःकार्तिकेतुविशेषतः तैलाभ्यंगंतथाशय्यांपरान्नंकांस्यभोजनं का
र्तिकेवर्जयेद्यस्तुपरिपूर्णव्रतीभवेत् संप्राप्तंकार्तिकंदृष्ट्वापरान्नंयस्तुवर्जयेत् दिनेदिने
सकृच्छ्रस्यफलमाप्नोत्यसंशयम् पक्वान्नानांतुभक्षाणांकार्तिकेनियमेकृते अवश्यंविष्णु
सान्निध्यंदुर्लभामुक्तिराप्यते इति तद्व्रतविधिंदर्शयति विष्णुरहस्ये आश्विनस्यामलेप
क्षेएकादश्यामुपोषितः व्रतमेतत्तुगृह्णीयाद्यावत्त्रिंशद्दिनानितु पाद्मेच आश्विनस्यतु
मासस्ययाशुक्लैकादशीभवेत् कार्तिकेनियमंतस्यांव्रतेकुर्यादतंद्रितः रात्र्यांतुर्यांशि
शेषायामुत्तिष्ठेत्सर्वदाव्रती नैर्ऋतिंचव्रजेद्ग्रामाद्बहिस्सोदकभाजनः दिवासंध्ययोक
र्णस्थब्रह्मसूत्रउदङ्मुखः अंतर्धायतृणैर्भूमिंशिरःप्रावृत्यवाससा वक्त्रंनियम्ययत्नेन
ष्ठीवनोच्छ्वासवर्जितः कुर्यान्मूत्रपुरीषेचरात्रौचदक्षिणामुखः उत्थायोऽतंद्रितःशौचं

कुर्याच्छुद्धोद्धृतैर्जलैः गंधलेपक्षयकरंयथासंख्यमृदाशुचा एकालिंगेगुदेतिस्त्रस्तथा
वामकरेदश उभयोर्हस्तयोःसप्ततिस्त्रस्तिस्त्रस्तुपादयोः तथाब्रह्मवैवर्तेब्रह्मखंडे ए
कालिंगेगुदेतिस्रस्तथावामकरेदश उभयोःसप्तदातव्याःपादौषष्ठेनशुद्ध्यतः पुरीषशौ
चंविप्राणांगृहीत्वामृदमेवच शौचंक्षत्रविशोश्चैवंद्विजानांगृहिणांसमं द्विगुणंवैष्णावा
दीनांमुनीनांपरिकीर्तितं न्यूनाधिकंनकर्तव्यंशौचशुद्धिमभीप्सतामिति आचमनप्रका
रंदर्शयति हारीतस्मृतौ आजंघान्मणिबंधात्तुप्रक्षाल्यशुभवारिणा उपविष्टश्शुचौ
देशेपवित्रपाणिराचमेत्प्रसृतिस्थेनवारिणा त्रिःप्राश्यांगुष्ठमूलेनद्विरुन्मृज्यकपोलकौ
मध्यमांगुलिभिःपश्चाद्विरोष्ठमामृजेत्तथा नासिकोष्ठांतरंपश्चात्पूर्वांगुलिभिरेवच पा
दौहस्तौशिरश्चैवजलैरुन्मार्जयेत्ततः अंगुष्ठतर्जनीभ्यांतुस्पृशेत्तांनासिकांपुरा अंगु
ष्ठानामिकाभ्यांतुचक्षुःश्रोत्रेजलंस्पृशेत् कनिष्ठांगुष्ठेननाभिंतलेनहृदयंततः सर्वांगु
लीभिःशिरसिबाहुमूलेतथैवच नामभिःकेशवाद्यैश्चयथासंख्यमुपस्पृशेत् द्विराच

मनंतुसर्वत्रविण्मूत्रोत्सर्जनेत्रयम् सामान्यमेतत्सर्वेषांशौचंतुद्विगुणोदितम् आच-
म्यातःपरंमौनीदंतान्काष्टेनशोधयेत् प्राङ्मुखोदङ्मुखोवापिकषायंतिक्तकंटकं क
निष्टाग्रमितस्थूलंद्वादशांगुलमायतम् बहुग्रंथिरहितंसौम्यंदंताग्रंतेनघर्षयेत् अन्हो
द्वादशगंडूषैर्वक्रंसंशोधयेन्नरः मुखंसंमार्जयित्वाथपश्चादाचमनंचरेदिति तथाब्रह्म
वैवर्तेब्रह्मखंडे आदौषोडशगंडूषैर्मुखशुद्धिंविधायच दंतकाष्टेनदंतांश्चततस्थातपरि
मार्जयेत् पुनःषोडशगंडूषैर्मुखशुद्धिंसमाचरेदिति नाडीद्वयावशिष्टायांरात्र्यांगच्छे
ज्जलाश्रयम् तिलदर्भाक्षतैःपुष्पैर्गंधाद्यैःसहितःशुचिः मानुषेदेवखातेवानद्याम
थचसंगमे क्रमाद्दशगुणंस्नानंतीर्थेऽनंतफलंस्मृतं स्मृत्वाचराधिकाकृष्णौकुर्यात्सं
कल्पंततःपरम् संकल्पमंत्रः कार्तिकेऽहंकरिष्यामिप्रातःस्नानंजनार्दन प्रीत्यर्थंत
वदेवेशराधयासहमाधव ध्यात्वाहंत्वांचदेवेशजलेस्मिन्स्नातुमुद्यतः तवप्रसा
दात्पापंमेदामोदरविनश्यतु व्रतिनःकार्तिकेमासिस्नातस्यविधिवन्मम गृहाणा-

र्घ्यंमयादत्तंराधयासहितोहरे स्मृत्वाभागीरथींविष्णुंशिवंसूर्यंजलेविशेत् नाभि
मात्रेजलेतिष्ठन्व्रतीस्नायाद्यथाविधि इतिपाद्मे ततोमौनेनस्तोत्रंप ठन् गृहमागत्य
स्वसंप्रदायरीत्याद्वादशतिलकंकृत्वाश्रीराधिकाकृष्णयुग्मंप्रपूजयेत् दामोदराभि
धानेनयत्रसंसेव्यतेहरिः अनंतश्रेयसांभूमिः सेव्यतेराधिकार्चितः कार्तिकेभगव
द्भक्तैः सोर्च्यतेतु तयासह एवंनिःश्रेयसःपंथायद्गोविंदपदार्चनं राधारमैवविज्ञेया
नापराक्वापिविश्रुता गोपाश्चगोपिकाश्चैवगावोयादवसंज्ञया कृष्णंसेवितुमा-
याताःगोलोकाद्दिव्यरूपिणः कृष्णसेवैवसंसारेसारत्वेननिरूपिता तस्मात्का
र्तिकमासेस्मिन्राधादामोदरौभजेत् इतिनारदपंचरात्रेसप्तत्रिंशत्पटले तथापाद्मे
ततःप्रियतमाविष्णोराधिकागोपिकासुच कार्तिकेपूजनीयाचश्रीदामोदरसन्निधा
विति आदौनिजकरौसम्यक्सुगंधाद्यैःप्रलिप्यप्रार्थनापूर्वकंश्रीमतींराधिकांदेवींप्र
बोधयेत् प्रार्थना उत्तिष्ठोत्तिष्ठभोराधेत्यजनिद्रांहरिप्रिये रासेश्वरिमहादेविश्री

दामोदरवल्लभे प्रबुद्धायैश्रियैदद्यात्तत्समयोचितंवसु मुखप्रक्षालनार्थायस्कगंधसलि
लादिकम् मुखसंमार्जनार्थायसूक्ष्मंवस्त्रंनिवेदयेत् राधानिदेशमासाद्यभावनयात
दीरितः कृष्णंमृदंगमर्दनैःशनैःशनैःप्रबोधयेत् राधाकृष्णौनिषेवेततततऐतिह्यरी
तितः राधादामोदरावेवंसंपूज्यप्रातरेवहि राधादामोदराष्टकंपठेद्गद्गदयागिरेति ए
वंव्रतविधिमुक्त्वातत्रविशेषकृत्यमुपदर्शयति तत्रकृष्णद्वादश्यांश्रीकृष्णादिनिजपर्यंता
न्गुरून्प्रपूजयेत् तथासांख्यायनः आविर्भावतिरोधानांज्ञात्वाज्ञात्वातुतद्दिने गु
रूणांकारयेदिष्टिंकार्तिकेज्ञस्तुवैष्णवीम् द्वादशीकृष्णपक्षस्ययावंतोवैष्णवोत्तमा इ
ति अथतत्रकृष्णत्रयोदश्यांसंध्यायांधर्मराजायतन्मंत्रपूर्वकंदीपंदद्यात् मंत्रःपाद्मे
मृत्युनापाशदंडाभ्यांकालःश्यामलयासह ऊर्जेकृष्णत्रयोदश्यांप्रीयतांदीपदानतः
अथकृष्णचतुर्दशीकृत्यं भविष्योत्तरे कार्तिकस्यासितेपक्षेचतुर्दश्यांविधूदये स्ना
तव्यंतिलतैलेननरैर्नरकभीरुभिरिति तत्रायंविधिः त्रयोदश्यांतुसंध्यायांचक्रमर्द

कमपामार्गंतुंबींकर्षिन क्षेत्रलोष्टंचानयित्वास्थापयेत् चतुर्दश्यामत्युषसिनद्यादावन्य
स्नानंकृत्वामंत्रंपठन् शीर्षोपरिताभ्रामयित्वाजलेक्षिपेत् तन्मंत्रःपाद्मे सीतालोष्टसमा
युक्तंसकंटकदलान्वितम् हरपापमपामार्गभ्राम्यमाणःपुनःपुनः गृहीतमौषधीत्रयं
मंत्रेणानेनवैष्णवः अपामार्गमथोतुंबींतृतीयंचक्रमर्दकं भ्रामयेत्स्नानमध्येतंनरक
स्यक्षयायवै इति सादिनद्वयेकृप्तोपरैव चंद्रोदयश्चतुर्दश्यांवर्ततेतुदिनद्वये तदाभ्यं
गंनरःकुर्यात्परेह्ननिविधूदये इतिजनकोक्तेः दिनद्वयास्पर्शेतुगालवः दिनद्वयेचतुर्द
श्यांनोदयश्चविधोर्यदि यामेभ्यंगंचतुर्दश्याःकुर्यादुषसिचाष्टमे इति अनर्केभ्युदि
तेकृष्णपक्षेचैवचतुर्दशी स्नात्वासंतर्प्यतुयमंसर्वपापैःप्रमुच्यते जीवत्पितापिकुर्वीत
तर्पणंयमभीष्मयोरितिपाद्मोक्तेर्नित्यत्वात्तत्रयमतर्पणमपिकर्तव्यं तर्पणमंत्रस्तुभ
विष्योत्तरे यमायधर्मराजायमृत्यवेचांतकायच वैवस्वतायकालायसर्वभूतक्षया
यच औदुंबरायदध्नायनीलायपरमेष्ठिने वृकोदरायचित्रायचित्रगुप्तायतेनमः इति

तत्ररात्रौदीपदानंकुर्यात् तच्चोक्तंपाद्मे दीपदानंचतुर्दश्यांहरिदुर्गार्थमाचरेत् शस्त्रा
स्त्रैर्निहतानांतुपितॄणामक्षयंभवेदिति अथामावस्याकृत्यंदर्शयति भविष्योत्तरे एवं
प्रभातसमयेत्वमावास्यांनराधिप कृत्वातुपार्वणंश्राद्धंदधिक्षीरघृतादिभिः दीपान्द
त्त्वाप्रदोषेतुलक्ष्मींपूज्ययथाविधि स्वलंकृतेनभोक्तव्यंसितवस्त्रोपशोभिना इति सा
परविद्धैवकार्य्याभूतविद्धानकर्त्तव्या दर्शपूर्णाकिदाचन इतिब्रह्मवैवर्तोक्तेः तत्संमत
वाक्यंच दिनावसानेक्षणमस्त्यमाचरेत्श्राद्धंविधायोल्मुकमेवकुर्यात् क्षयेप्रवृद्धौ
प्रतिपद्युपेतेदर्शेततोग्रेबलिपूजनंस्यात् श्राद्धेकृतेशारदगामिदर्शेतदोल्मुकंदूषण
कृन्नराज्ये तदानिशीथेस्करशक्तिपूजादर्शेपिलोकेश्वरसौख्यदास्यादितिज्योतिर्वि
दाभरणनिबंधे इतिनिर्णयसामान्यकृत्यंदर्शयित्वा निंबार्कानुयायिनांविशेषकृत्य
माहुः श्रीमदाचार्यवर्याः द्वादशाहंहरेःपूर्वंराधाप्रबोधनंमतम् लोकशास्त्रप्रका-
रेणप्रकुर्याद्वैष्णवोनरः दिवातत्रनभोक्तव्यंविनाबालातुरान्जनान् प्रदोषसमयेराधां

पूजयेच्चयथाक्रममिति तत्रयथाशक्त्युपचारेणजागरणोत्सवंकृत्वाश्रीराधाकृष्णयो
रग्रेदीपदानंकुर्यात् अग्निर्ज्योतीरविर्ज्योतिश्चंद्रोज्योतिस्तथैवच उत्तमःसर्वज्योतीनां
दीपोयंप्रतिगृह्यतामिति तत्रप्रतिपदिप्रातःकालेगोवर्द्धनंगोविंदंचपूजयेद्भूषयेच्च तच्चो
क्तंपाद्मे गोवर्द्धनहरेःपूजागोमहिष्यादिपूजनं भूषणीयास्तथागावःपूज्याश्चाबाह्यदे
वता इति पूजामंत्रस्तत्रैव गोवर्द्धनधराधारगोकुलत्राणकारक कृष्णबाहुकृतोच्छ्रा
यगवांकोटिप्रदोभव इति गोपूजामंत्रस्तु लक्ष्मीर्यलोकपालानांधेनुरूपेणसंस्थिता
घृतंवहतियज्ञार्थेममपापंव्यपोहतु इति कृत्वापूजागवांताभ्योग्रासंदत्त्वानमेच्चताः
अन्नकूटंधनाधिक्येकृत्वागोवर्द्धनात्मने श्रीकृष्णायसमर्पयेत्कृष्णसंतोषकारकमि
ति श्रीमदाचार्यवाक्यं तथापद्मे गोवर्द्धनमखोरम्यःकृष्णसंतोषकारकः करणीयः
स्वभूयस्तेकृष्णप्रीणननत्परैरिति प्रकारांतरमपिपाद्मे मथुरायांतथान्यत्रकृत्वागोव
र्द्धनंगिरिम् गोमयेनततःस्थूलंततःपूज्योगिरिर्यथेति गोमयेनस्थूलपर्वताकारंकृत्वा

व्यंजनादिभिः पूजयेत् नत्वोक्तंश्रीमदाचार्यवर्यैः अन्यत्रतुमथुरायांविधायगोमयेनहि
गोवर्द्धनंस्कृपूजयेन्नानाव्यंजनराजिभिरिति पूजाकालोभिहितः स्कंदपुराणे प्रातर्गोव-
र्द्धनंपूज्यद्यूतंचापिसमाचरेत् भूषणीयास्तनोगावः पूज्याश्चावाहदोहना इति किय-
न्मितः प्रातःकालइत्याकांक्षायांतदुच्यते भास्करोदयमारभ्ययावत्तुदशनाडिकः प्रातः
कालइतिप्रोक्तःस्थापनारोपणादिष्विति विष्णुधर्मोत्तरे अथतद्दिनंनिर्णीयते विद्धा
धिकदिनद्वयेकर्मकालव्याप्तौतुपरैव तिस्रोह्येताःपराःप्रोक्तास्तिथयःकुरुनंदन का-
र्तिक्याश्वयुजेमासिचैत्रेमासिचभारतेति भविष्योक्तेः विद्धाधिकेसमेन्यूनेचद्विती
यायांतुनदिनक्षयनिमित्तदोषोदयः तत्रफलविशेषश्रवणात् शिवरहस्ये प्रतिपद्दिव
सेकुर्यात्पूजांगोवर्द्धनस्यच पूर्वविद्धानकर्तव्यायाचदृश्यादिनद्वये नंदायामेमोदसा
नाभद्रानष्टाप्रजायते पूतंभवतितद्वर्षंराज्यदंस्कृरववर्द्धनमिति विद्धासमन्यूनायांतुसै
व प्रतिपत्स्वल्पमल्पापियदिनस्यात्सरेहनि पूर्वविद्धात्तदाकार्यासितेपक्षेचकार्तिके इ

तिवसिष्ठोक्तेः शुद्धाधिक्यदिनद्वयेकालव्याप्तौतुपूर्वैव रवेरुदयमारभ्यप्रतिपत्षष्टि-
नाडिका प्रतिपत्सैवकर्तव्यानापराधर्महानिदा इतिवसिष्ठसंहितोक्त्या किंच संलग्न
मेवकर्तव्यंदीपोत्सवदिनत्रयमिति संलग्नदर्शकवाक्यसंभवाभिप्रायेण कदाचित्सर्वेषां
परेद्युरेव गोपूजानुष्ठानंसंप्रतिपन्नंतदासर्वैरपि गोवर्द्धनोत्सवस्तुपरेद्युरेवकर्तव्यः पू-
र्वोक्तस्वप्रकरणीयनिर्णयविशेषात् कार्तिकेप्रतिपच्छुक्लामुहूर्तवाकलायदि तत्रोत्सवा
दिकृत्येषुकर्तव्याशुभकांक्षिभिरिति व्याघ्रोक्तेः अस्माकंसिद्धांतस्तुस्कांदेऽभिहितः स्फु
टतरं प्रतिपत्परविद्धायात्याज्यासापूजनेगवां नीराजोत्सवाभ्यंगेदर्शविद्धांपरित्यजे
दिति मुकुंददेवैस्त्विदमेवोक्तं गोर्चापरस्यांप्रतिपत्तिथौस्याद्ध्रोक्रीडनंतुप्रथमान्विता
यामिति तत्रशुक्लाष्टमीगोपाष्टमी तच्चोक्तंपद्मपुराणे शुक्लाष्टमीकार्तिकेतुस्मृतागो
पाष्टमीबुधैः तद्दिनेवासुदेवोऽभूद्गोपपूर्वंतुवत्सपः अत्रकुर्याद्गवांपूजांगोग्रासंचप्रद-
क्षिणम् गवानुगमनंकार्यंसर्वान्कामानभीप्सता इति सापरेद्युरेवकार्याविस्तरंभयोरि

तिद्युग्मवाक्यात् पूर्वविद्धतिथित्यागोवैष्णवस्यहिलक्षणमिति पूर्वोक्तेश्च तत्रास्मा
कंकृत्यंश्रीमदाचार्यवर्याश्चाहुः शुक्लाष्टम्यांतुकार्तिकेसमाहूयोत्तमान्सततः कृष्णव-
च्छ्यामस्कंदरंवेषयित्वाविधानतः यशोदानंदगोपंचतथागोपालबालकान् कल्पयि
त्वायथायोग्यंसगोगोपार्भकंहरिम् नंदाज्ञयायशोदयादत्तंचतुर्विधान्नकम् बलदे-
वादिसहितंगोचारणेवनंनयेत् ततःसर्वदिनंक्रीडांसंध्याकालेविधायवै कृष्णमनुगृ
ह्यानेत्यस्नानपानादिकंततः कारयित्वार्भकंकृष्णंशाययित्वाविधानतः पूजयित्वाप्र-
सादाद्यैर्वैष्णवांश्चप्रसादयेदिति तत्रशुक्लनवम्यांतुलस्युद्वाहोत्सवंकुर्यात् तच्चोक्तं
पाद्मे कार्तिकेशुक्लनवमीमवाप्यविजितेंद्रियः हरिंविधायसौवर्णंतुलस्यासहितंविभु
म् पूजयेद्विधिवद्भक्त्याव्रतीतत्रदिनत्रयम् एवंयथोक्तविधिनाकुर्याद्वैवाहिकंविधि
मिति तत्रशुक्लैकादशीसाप्रबोधिनी तच्चोक्तंवाराहे कार्तिकेऽमलपक्षेतुसाक्षादेकाद
शीस्मृता भक्तिप्रदाहरेःसाचनाम्नाख्याताप्रबोधिनी यासाविष्णोःपरामूर्तिरव्यक्तानै

करूपिणी साक्षिसामानुषेलोके द्वादशीमुनिपुंगवेति तस्यामेवप्रबोधोत्सवःकार्यः तद्ब्रा
ह्मेऽभिहितः एकादश्यांचशुक्लायांकार्तिकेमासिकेशवम् प्रसुप्तंबोधयेद्रात्रौश्रद्धभक्ति
समन्वितः नृत्यैर्गीतैस्तथावाद्यैर्ऋग्यजुःसाममंगलैः वीणापणवशब्दैश्चपुराणश्रव
णेनच वासुदेवकथाभिश्चस्तोत्रैरन्यैश्चवैष्णवैरिति अत्ररात्राविति एकादश्याःप्रांत
भागंरात्रिविषयंरात्र्यंतभागेदिवाकर्मविहितत्वात् अन्यथा निशिस्वापोदिवोत्थानंसंध्या
यांपरिवर्तनमिति मत्स्यपुराणोक्त्यादिवोत्थानविहितविरोधापत्तेः विष्णुर्दिवानस्वपि-
तिनचरात्रौप्रबुध्यते द्वादश्यामृक्षसंयोगेपादयोगोनकारणमिति विष्णुधर्मोक्तिवि-
रोधापत्तेश्च किंच आभाकासितपक्षेषुमैत्रश्रवणरेवती आदिमध्यावसानेषुप्रस्वा
पावर्तनोत्सवा इतिभविष्योक्तेस्तत्रनक्षत्रयोगस्यनित्यत्वाद्यदा द्वादश्याः प्रांतभागे
तन्नक्षत्रयोगोनस्यात्तदाकिंकर्तव्यमित्यपेक्षायांतदुच्यते अप्राप्तेद्वादशीमृक्षेउत्थान
शयनेहरेः पादयोगेनकर्तव्यंनाहोरात्रंविचिंतयेदिति जीमूतवाहनधृतवचनात् पा

द्योगादन्यतिथौद्वादश्यामृक्षसंगमादितिवचनाच्च द्वादश्यांनक्षत्रभागयोरस्पर्शात्राव-
भावेपितत्रैवकार्यमित्यर्थः इदंतुवाराहेस्फुटतरमुक्तं द्वादश्याःसंधिसमयेनक्षत्राणाम
संभवे आभाकासितपक्षेषुशयनावर्तनादिकमिति संधिसमयश्चसायंसंध्यैवप्रबोधो
पितत्रैवकार्यः रेवत्यंतोयदारात्रौद्वादश्यांचसमागतः तदाविबुध्यतेविष्णुर्दिनांते
प्राप्यरेवतीमितिजीमूतवाहनधृतवचनात् तन्निर्णयमुक्त्वाविधिंचदर्शयतिश्रीमदा
चार्यवाक्येन तत्रस्नानादिकंकृत्वामहास्नानेनकेशवं प्रसुप्तंबोधयेद्रात्रौसंतोष्यो
त्थापयेद्धरिम् तत्रमंत्रः श्रुतौ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते त्वयाचोत्थी
यमानेनउत्थितंभुवनत्रयम् कुमाराः इयंतुद्वादशीदेवप्रबोधार्थंतुनिर्मिता त्वयै
वसर्वलोकानांहितार्थंशेषशायिना सुप्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदम् उत्थि
तेचेष्टतेसर्वमुत्तिष्ठोत्तिष्ठमाधव गतामेघावियच्चैवनिर्मलंविमलादिशः शारदानि
चपुष्पाणिगृहाणममकेशव उत्थितंभगवंतंतुक्षीराद्यैरभिषेचयेत् अभिषिच्यमहा

विष्णुंवस्त्रालंकारचंदनैः पुष्पादिभिर्विचित्रान्नैस्तांबूलैःपूजयेद्धरिमिति एवंचोक्तरी
त्याविधिवदुत्थापनंकृत्वा श्रीमत्परमकल्याणगुणगणाकरं श्रीराधाकृष्णात्मकयुग्मंर
थारूढंकुर्यात् तदुक्तंभविष्ये महातूर्यरवैरात्रौभ्रामयेत्स्यंदनेस्थितम् उत्थितंदेव
देवेशंनगरेपार्थिवःस्वयम् दीपोद्योतकरेमार्गेनृत्यगीतसमाकुले इति तथाचब्रह्मवा
क्येनतन्माहात्म्यंप्रदर्श्यते बोधिनींजगदाधारःकार्तिकेशुक्लपक्षतः रथस्थोयत्र-
भगवांस्तुष्टोयच्छतिवांछितं भजंतेमेरथारूढंदेवंसर्वेश्वरंहरिम् तेषांयात्राकृता
नृणांकामानिष्टान्प्रयच्छति कृष्णस्यरथशोभांयेप्रकुर्वंतिप्रहर्षिताः तेषांमनोर-
थावाप्तिंयच्छतेपुरुषोत्तमः तथामहाभारतेभीष्मः रथयात्रास्थितेकृष्णेजयेति
प्रवदंतिये जयेतिचपुनर्येवैशृणुपुण्यंवदाम्यहं गंगाद्वारेप्रयागेच गंगासागरसंग
मे वाराणस्यादितीर्थेषुदेवतानांचदर्शने यत्फलंकविभिःप्रोक्तंकात्स्न्येंनचनरेश्वर
जयशब्देकृतेविष्णोरथस्यतत्फलंस्मृतं मंगलंयेप्रकुर्वंतिधूपंदीपंतथास्तवं नैवेद्यं

वस्त्रपूजांचभक्त्यानीराजनंहरेः रथारूढस्यकृष्णस्यसंप्राप्तेहरिवासरे फलंनतन्मया
ज्ञातंजानातियदिकेशवः येषांगृहाग्रतोयातिरथस्थोमधुसूदनः पूजातैस्तैःप्रकर्तव्या
वित्तशाठ्यविवर्जितैः गोघ्नोब्रह्मस्वहारीचभ्रूणहाब्रह्मनिंदकः महापातकयुक्तोपिब्रह्म
हागुरुतल्पगः मद्यपःसर्वपापीचकलिकालेनमोहितः रथाग्रतःपदैकेनमुच्यतेसर्वपा
तकैः रथेनसहगच्छंतिपुरतःपृष्ठतोग्रतः विष्णुलोकोपमाःसर्वेभवंतिश्वपचादयः र
थस्थंयेनिरीक्षंतेकौतुकेनतुकेशवम् देवतानांगणाःसर्वेभवंतिश्वपचादयः स्त्रियोपिमु
क्तिमायांतिरथयात्रापरायणाः भर्तृमातृपितृकुलंनयंतिहरिमंदिरम् कुर्वंतिनर्तकी
रूपंरथाग्रेकौतुकान्विनम् अप्सरोभिश्चक्रीडंतेयावदिंद्राश्चतुर्दश इत्यन्वयेनमा
हात्म्यंप्रदर्श्यव्यतिरेकेणचदर्शयति महाभारते नानुव्रजतियोमोहाद्व्रजंतंजगदीश्व
रं ज्ञानाग्निदग्धकर्मापिसभवेद्ब्रह्मराक्षसः अनर्चितोयदायातिगृहादस्यमहीधरः
पितरस्तस्यविसुखावर्षाणांदशपंचच रथस्थंयेनपश्यंतिभ्रममाणंजनार्दनं विप्रा

ध्ययनसंपन्नाभवंतिश्वपचाधमा इति तत्रमनुष्यैःस्पृष्टःसन्नशौचशंकांनकुर्यात् त
दुक्तंमहाभारते कृष्णोत्सवसमायातान्दृष्ट्वाहरिजनान्क्वचित् नैवकार्यश्शुचेःशंका
पुण्यास्तेभक्तिसंयुताः सर्वेविप्रसमाज्ञेयाःश्वपचाद्यानसंशयः येकुर्वंतिदिनेवि
ष्णोर्जागरंगीतकीर्तनमिति तथासात्वते विष्ण्वालयसमीपस्थान्विष्णुसेवार्थमा
गतान् चांडालान्पतितान्वापिस्पृष्ट्वानस्नानमाचरेत् उत्सवेवासुदेवस्ययस्नायाद्यो
ऽशुचिशंकया तादृशंकश्मलंदृष्ट्वासवासाजलमाविशेदिति विष्णुस्मृतौ देवयात्रा-
विवाहेषुयज्ञोपकरणेषुच उत्सवेषुचसर्वेषुस्पृष्टास्पृष्टिर्ननिंद्यते इति तत्रैवतप्तचक्रा
दिधारणं तदुक्तंभविष्ये शायिन्यांचैवबोधिन्यांचक्रतीर्थेतथैवच शंखचक्रविधा-
नेनवन्हिपूतोभवेन्नर इति तथाश्रीमुकुंदः दीक्षाकालेशायिन्यांचबोधिन्यांचयथा
विधौ द्वारकायांसदाधार्यातप्तमुद्रातुवैष्णवैरिति सचनित्यंतदुक्तंपद्मपुराणे अ
ग्निहोत्रंयथानित्यंवेदस्याध्ययनंयथा तथैवेदंब्राह्मणस्यतप्तचक्रादिधारणमिति

ह्यद्मनुरपि यज्ञोपवीतवद्धार्याःशंखचक्रादयस्तथा ब्राह्मणस्यविशेषेणक्षत्रियस्यवि
शेषतइति शांडिल्यस्मृतावपि पशुपुत्रादिकंसर्वंग्रहोपकरणानिच अंकयेच्छंखच-
क्राभ्यांनामकुर्याच्चवैष्णवः ब्रह्मांडेमोक्षधर्मेपि ब्रह्मचारीगृहस्थोपिवानप्रस्थोथ
भिक्षुकः अवश्यंधारयेच्चक्रमग्नितप्तमतंद्रितइति हारीतस्मृतावपि चतुर्णामपि
सामान्यंविष्णोश्चक्रस्यधारणं संस्कारादात्मनस्तस्यनारीणांचद्विजन्मनाम् त
स्माच्चक्रविधानेनप्रतप्तंधारयेद्विजः सर्वाश्रमेषुवर्णानांस्त्रीणांचश्रुतिचोदनाइति
योहवैसकृल्लोकमौलेर्धर्माननुतिष्ठमानोऽग्निनाचक्रंधत्ते अग्निर्वैसहस्रसःसहस्रा
रोनेमिनातप्ततनुःसायुज्यसलोकतामाप्नोति चक्रंबिभर्तिवपुषाभितप्तंबलंदेवाना
ममृतस्यविष्णोः सएतिनाकंदुरितंविधूयविशंतियद्यतयोवीतरागाइति यजुःसुऋ
ग्वेदीयाश्वलायनशाखायांच प्रतद्विष्णोरक्षचक्रेसुतप्तेजन्मांभोधिवर्ततेवर्षणीद्राः
मूलेबाह्वोर्दधतेऽन्येपुराणानिलिंगान्यन्येतप्तान्यायुधान्यप्पयंते इतिश्रुतिश्चसाम

वेदे प्रतद्विष्णोस्तवचक्रेसुतस्ते इत्यादियजुर्वेदेकठशाखायामपि धृतोर्द्धपुंड्रः कृतचक्रधा
रणोविष्णुंपरंध्यायतियोमहात्मा स्वरेणमंत्रेणसदाहृदिस्थंपरात्परंयन्महतोमहांतमि
त्यादि अथर्वणोपनिषद्यपि चक्रंबिभर्तिवपषेत्यादि अन्यत्रापिशतशः किंच धृतोर्द्ध
पुंड्रकृतचक्रधारणइत्यादिश्रुतीनांपठ्यमानश्रुतायनुपलब्धेनापिनात्रशंका यज्ञोपवी
तंपरमंपवित्रमित्यादिश्रुतीनांपठ्यमानश्रुतावदर्शनेपिसूत्रेतद्विनियोगादसंदिग्धं त
थात्रापिधृतोर्द्धपुंड्रकृतचक्रधारणइत्यादिश्रुतीनांभगवच्छास्त्रेपंचरात्रहारीतादिषु
विनियोगान्नतथाशंकनीयं अथतत्ररात्रौविशेषेणजागरणंकुर्यात् तदुक्तंस्कंदपुराणे
चलंतिपितरोहृष्टाविष्णुलोकमलंकृताः विमुक्तानारकैर्दुःखैः कर्तुंकृष्णप्रजागरम्
भार्यापक्षेतुयेजातामातरःपितरस्तथा तारयेन्नात्रसंदेहः प्रबोधिन्यांतुजागर इति
किमधिकमित्यलं एवंजागरणांतेपरेद्युःपारणंकुर्यात् यत्तुकेचित् आभाकासितप
क्षेषुमैत्रश्रवणरेवती संगमेनैवभोक्तव्यंद्वादशाद्वादशीहरेरित्युक्त्यारेवत्यंतेनैवपारणं

कुर्यादित्याहुस्तन्न त्रेतायांरेवतींत्यजेदिति वायुपुराणोक्त्यात्रेतायुगविषयविशेषत्वात्
अथतत्रपौर्णिमास्यांभगवद्दीपोत्सवःकार्यः तच्चोक्तंश्रीमन्नारदपंचरात्रे ऊर्जेसितेपौ
र्णिमायांकृतस्नानादिसत्क्रियः देवस्यपुरंतोमंत्रजपमुच्चारयेच्छुचिः अद्यदीपोत्सवं
देवकरिष्येत्वत्प्रसादतः निर्विघ्नविधिमायातुयथोक्तंफलदोभव इतिसंकल्प्यदीप
स्यपात्राणिसाधयेत् अयोमयानिताम्राणिरौप्यस्वर्णमयानिच मृण्मयेनतुपात्रेण
गोघृतानिस्कराधिप दीपंददातिसद्भक्त्याज्ञानीयोगीस्करवीभवेदिति सापरविद्धैव
कार्या भूतविद्धानकर्तव्यादर्शपूर्णाकिदाचन वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तम
मितिब्रह्मवैवर्तोक्तेः पूर्वविद्धदिनेदत्तंयत्किंचनपूजनंचवै नैवगृह्णातिवैकुंठःपूजांत
द्दिनसंभवामितिनारदीयोक्तेश्च पूर्वविद्धतिथित्यागोवैष्णवस्यहिलक्षणमितिश्री
मन्नारदपंचरात्रोक्तेश्च इतिकार्तिककृत्यं अथमार्गशीर्षकृत्यं श्रीमत्कुमाराआ
हुः मासिमार्गशिरेपुण्येमहाविष्णुःप्रयत्नतः पूजनीयोमहाभक्त्यातुलसीकानने

शुभे तत्रमहोत्सवः कार्योवैष्णवैर्मुदितासनैः गीताद्यैः पुष्पतांबूलैः सतामानंदवर्द्धनः
श्रीकृष्णायनवंवस्त्रंतूलिकाद्यंसमर्पयेत् द्वादश्यांतत्रशुक्लायांविशेषेणभजेद्धरिमित्या
दिवाराहेदुर्वासाख्यंयथा मार्गस्यशुक्लपक्षस्यद्वादश्यांनियतात्मवान् स्नात्वादेवार्च
नंकृत्वाचाग्निकार्ययथाविधि शंखचक्रगदापाणिंपीतवासःकिरीटिनं ध्यात्वाजलं
गृहीत्वातुभानुरूपंजनार्दनम् स्तुत्वार्घ्येद्दीपयेत्पश्चात्करयोर्येनमाधवः ततःपूजावि
धानेनकांतयाकेशवंभजेत् केशवायनमःपादेकटिंदामोदरायच जानुभ्यांनारसिंहा
यऊरूश्रीवत्सधारिणे कंठेकौस्तुभनाभायवक्षःश्रीपतयेनमः त्रैलोक्यविजयाये
तिबाहूसर्वात्मनेनमः धूपदीपोपहाराद्यैरेवंकृष्णंश्रियाभजेत् ब्रह्महत्यादिपा-
पानित्विहलोकेकृतान्यपि अकामतःकामतोवातानिनश्यंतितत्क्षणात् याचवं-
ध्याभवेन्नारीअनेनविधिनाशुभा उपोष्यातुभवेत्तस्याःपुत्रःपरमवैष्णवइति अथ
पौषकृत्यं तत्रशुक्लैकादश्यांमाघस्नानारंभ उक्तोब्राह्मे एकादश्यांशुक्लपक्षेपौषमासेस-

मारभेत् द्वादश्यांपौर्णमास्यांवाशुक्लपक्षेसमापयेदिति माघेइतिशेषः तत्रशुक्लद्वादश्यां
हरिमर्चयेत् तदुक्तंश्रीसनत्कुमारेण पौषमासस्ययापुण्याद्वादशीशुक्लपक्षतः तद्व
दाराधयेत्तत्रदेवदेवंजनार्दनमिति अथमाघकृत्यं तस्यमाहात्म्यपूर्वकंकर्तव्यंदर्शय
ति गारुडेश्रीमन्नारदः दुर्लभोमाघमासस्तुवैष्णवानामतिप्रियः देवतानामृषीणां
चमुनीनांसुरनायक विशेषेणशचीनाथमाधवस्याथवल्लभः अधिकोमाघमास
स्तुमासानांहिशचीपते पौष्यांतुसमतीतायांयावद्भवतिपूर्णिमा माघमासस्यवि
प्रेंद्रैः पूजाविष्णोर्विधीयते स्नानंविलेपनंधूपंनैवेद्यादिसमुद्भवम् माघमासेकृतंवि
ष्णौसर्वंभवतिचाक्षयमिति तथापाद्मे धर्ममूलंसदामाघःपापमूलनिकृंतनः काम
मूलफलद्वारोनिष्कामोज्ञानदःसदा देवलोकान्निवर्तंते पुण्यैरन्यैःपरंतप कदाचिन्न
निवर्तंतेमाघस्नानरतादिव इति तथादत्तात्रेयवाक्यानि मकरस्थेरवौमाघेप्रातःका
लेतथामले गोपदेपिजलेस्नानंस्वर्गदंपापिनामपि तप्तवारिणास्नानंतुयद्गृहेक्रियते

नरैः षड्गुणंफलदंताद्भिमकरस्थेदिवाकरे बहिःस्नानंतुवाप्यादौद्वादशाब्दफलंस्मृतं त
डागेद्विगुणंराजन्नद्यांतच्चचतुर्गुणम् दशधादेवखातेचशतधातुमहानदी शतचतुर्गु
णंराजन्महानद्यास्तुसंगमे सहस्रगुणितंसर्वंतत्फलंमकरेरवौ गंगायाःस्नानमात्रेण-
लभ्यतेमानुषेभव इत्यन्वयमुक्त्वाव्यतिरेकंचदर्शयति अमाघस्नायिनांनृणांनिःफलंज-
न्मकीर्तितम् असूर्यगगनंयद्वदचंद्रमुडुमण्डलम् तद्वन्नाभातिसत्कर्ममाघस्नानंवि
नानृप मकरस्थेरवौयोहिनस्नायादुदितेरवौ कथंपापैःप्रमुच्येतकथंचत्रिदिवंव्रजेदि
ति स्नानकालस्तुब्राह्मे अरुणोदयेतुसंप्राप्तेस्नानकालेविचक्षणः माधवांघ्रियुगं-
ध्यात्वायःस्नातिसुरपूजित इतिअरुणोदयमारभ्यप्रातःकालावधिसंप्राप्तेतत्रोच्यते
माघस्नानभवंपुण्यंक्रमात्तत्रैवधारणा उत्तमंतत्सनक्षत्रंलुप्ततारंतुमध्यमं सवितर्युदि
तेभूपततोहीनंप्रकीर्तितमिति संप्राप्तेमाघमासेतुतपस्विजनवल्लभे क्रोशंतिसर्ववारी
णिसमुद्गच्छतिभास्करे माघमासेरटंत्यापःकिंचिदभ्युदितेरवौ ब्रह्मघ्नंवासुरापंवाकं

पतंतंपुनीमहे इत्यादिनारदीयवचनानिसंगच्छंते तत्रेदमवधेयमेतान्यसमर्थजनविषया
णिभवंति दत्तात्रेयवाक्यैःस्नानविधिंदर्शयति मकरस्थेरवौमाघेगोविंदाच्युतमाधव
स्नानेनानेनमेदेवयथोक्तफलदोभव इमंमंत्रंसमुच्चार्यस्नायान्मौनंसमाहितः वासुदेवं
हरिंकृष्णंमाधवंचस्मरेत्पुनः इति ततोगृहमागत्यस्वसंप्रदायरीत्याश्रीराधाकृष्णंपूज
येत् इतिसामान्यकृत्यमुक्त्वा मकरसंक्रमेनिर्णयंदर्शयति अतीतानागतेपुण्ये द्वेउ
दग्दक्षिणायने त्रिंशत्कर्कटकेनाड्यो मकरेविंशतिःस्मृता इति वृद्धवसिष्ठः ब्रह्मवैवर्ते
तु मकरेतुदशाधिका इतिपाठः रात्रौमकरसंक्रमेतुपरदिनेसूर्योदयोत्तरपूर्वमहर्दलंपु
ण्यं तच्चोक्तंभविष्योत्तरे कार्मुकंतुपरित्यज्य झषंसंक्रमतेरविः प्रदोषेवानिशार्द्धेवा-
स्नानंदानंपरेहनीति परेहनीत्युक्तेपिपूर्वार्द्धएव आसन्नंसंक्रमंपुण्यंदिनार्द्धंस्नानदा-
नयोरितिवचनात् तत्रकृत्यंकालिकापुराणे होमंतिलैःप्रकुर्वीतसर्वदैवोत्तरायणे ता
निदेवायविप्रेभ्योहाटकेनसमंददत् इति प्रसंगादिदमप्युक्तंविशेषमाघकृत्यंदर्शयति

तत्रकृष्णद्वादशीतिलद्वादशी तदुक्तंब्रह्मपुराणे माघेतुकृष्णद्वादश्यांयमोहिभगवान्
पुरा तिलान्युत्पादयामासतपःकृत्वासुदारुणम् तस्यामुपोषितःस्नातस्तिलैस्तस्यांय
जेद्धरिम् तिलतैलेनदीपाश्चदेयादेवगृहेषुच निवेदयेत्तिलान्येवहोतव्याश्चतिलास्तथेति
तत्रकृष्णचतुर्दश्यांयमतर्पणं तदुक्तंहेमाद्रौयमेन अनकाभ्युदितेकालेमाघकृष्णचतु-
र्दशी स्नातःसंतर्प्यचयमंसर्वपापैःप्रमुच्यते इति तत्रामावस्यांरविव्यतीपातश्रवणे
योगेऽर्द्धोदयः तच्चोक्तंनिर्णयामृते अमार्कपातश्रवणैर्युक्ताचेत्पुष्यमाघयोः अर्द्धो
दयःसविज्ञेयःकोटिसूर्यग्रहैःसमः दिवैवयोगःशस्तोयंनतुरात्रौकदाचनेति पुष्यमाघ
योर्मध्यवर्तिनीअमापौषीअमावस्येत्यर्थ इतिनारायणभट्टाः अतएवहेमाद्रौस्कांदे
माघामायांव्यतीपातेआदित्येविष्णुदैवते अर्द्धोदयंतदित्याहुःसहस्रार्कग्रहैःसममि-
ति अत्रपूर्णिमांतमासेनमाघामावास्येति मदनरत्नः कालादर्शेमदनरत्नेपुष्यस्यमाघ
स्यवेत्युक्तंतन्माहात्म्यंदर्शयति अर्द्धोदयेतुसंप्राप्तेसर्वेगंगासमंजलं शुद्धात्मनोद्विजाः

सर्वेभवेयुर्ब्रह्मसंमिताः यत्किंचिद्दीयतेदानंतद्दानंमेरुसन्निभमिति एतान्यपिप्रसंगादु
क्तानि तत्रतिलद्वादशीव्रतस्ययमतर्पणस्यच करणाकरणयोरपिनास्माकंप्रत्यवायोऽ
स्माद्धर्मादिविरुद्धत्वाच्छ्रीमदाचार्यानभिहितत्वाच्च एवंप्रकारेणयत्रयत्रप्रसंगादुक्तमि
तिपदंदृश्यतेतत्रतत्रेदमवधेयं तत्रशुक्लपंचम्यांवसंतोत्सवःकार्यः तच्चोक्तंनारदीये
माघस्यशुक्लपंचम्यांमहापूजांसमाचरेत् नवैःप्रवालैःकुसुमैरनुलेपैर्विशेषतः नीरा
जनोत्सवंकृत्वाभक्तसामान्यवैष्णवान् वसंतरागंजनयन्गीतनृत्यादिकारयेत् इति
साविद्धाधिकेपरेद्युरेव पूर्वविद्धदिनेदत्तंयत्किंचित्पूजनंचवै नैवगृह्णातिवैकुंठःपूजां
तद्दिनसंभवामिति नारदीयोक्तवाक्यत्वात् उदयेयाकलामात्रासाव्याप्नोत्यखिलंदिन
मिति श्रीमन्नारदपंचरात्रवाक्योपलंभाच्च श्रीमदाचार्यवाक्यैस्तदुत्सवविधिंदर्शयति
संस्कृत्यराधाकृष्णयोर्गंधपुष्पजलादिभिः सतांमंदिरमाहूयमहास्नानंप्रदायहि ताभ्या
महास्रनैवेद्यंनानागुणमयंशुभं नवीनपीतवस्त्राद्यैरलंकुर्याच्छ्रियंहरिम् समाहृतान्

समाहुस्तान्समानोपासकान्स्ततः प्रसाद्यहर्यवशेषाद्यैर्महोत्सवमुपक्रमेत् आरभ्यशु-
क्लपंचमींकृष्णस्यशयनावधि वसंतरागमुन्नयेद्राधाकृष्णरसान्वितमिति इदमप्याहुः
श्रीमत्कुमाराः श्रीपंचमींसमारभ्ययावत्स्याच्छयनावधि वसंतरागःकर्तव्योनान्यदेति
कदाचनेति तत्रशुक्लसप्तमीरथसप्तमीतस्यामरुणोदयेस्नानंकार्यं तदुक्तंस्मृतिसंग्रहे
सूर्यग्रहणतुल्याहिशुक्लामाघस्यसप्तमी अरुणोदयवेलायांस्नानंतत्रमहाफलं भवि
ष्योत्तरेतथा माघेमासिसितेपक्षेसप्तमीकोटिभास्करा कुर्यात्स्नानदानाभ्यामायु-
रारोग्यसंपदा इति इदंप्रसंगादुक्तं तत्रशुक्लाष्टम्यांभीष्मतर्पणं तदुक्तंपाद्मे माघेमा
सिसिताष्टम्यांसतिलंभीष्मतर्पणं श्राद्धंचैवतुयेकुर्युस्तेस्युःसंततिभागिन इति त
र्पणंतुकाम्यंनित्यंच ब्राह्मणाद्याश्चयेवर्णादद्युर्भीष्मायनोजलम् संवत्सरकृतंतेषां
पुण्यंनश्यतिसत्तमेति मदनरत्नधृतवचनात् जीवत्पितापिकुर्वीततर्पणंयमभीष्म-
योरितिवचनाच्च तर्पणमंत्रः भीष्मःशांतनवोवीरःसत्यवादीजितेंद्रियः आभिर

ङ्क्षिस्त्ववाप्नोतुपुत्रपौत्रोचितांक्रियां वैयाघ्रपद्यगोत्रायसांकृतिप्रवरायच अपुत्रायददाम्ये
तज्जलंभीष्मायवर्मणे इति तत्रशुक्लैकादशीभीमद्वादशी तत्रोक्तंपाद्मे त्वयाकृतमि
दंवीरत्वनाम्नाभविष्यति साभीमद्वादशीत्येषासर्वपापहराशुभा इति द्वादशी एका
दशी एकादश्यांनिराहारःसम्यगभ्यर्च्यकेशवमिति संकल्पमंत्रलिंगात् इदंतुकर्तव्य
मेवपूर्वोल्लासविहितत्वात् तत्रपौर्णिमासीमाघीसायोगविशेषेणमहामाघी तथागा
र्ग्यः मेषराशौयदासौरिःसिंहेचैवबृहस्पतिः भास्करःश्रवणर्क्षेचमहामाघीतिसास्मृ
ता इति सौरिःशनैश्चरः तत्रभगवत्पूजनादिकंविशेषेणकर्तव्यंप्रसंगादुक्तंतत्रेदमपिज्ञे
यम् इतिमाघकृत्यं अथफाल्गुनकृत्यंदर्शयति तत्रकृष्णाचतुर्दश्यांशिवरात्रिव्र
तम् शिवरात्रिव्रतेभूतंकामविद्धंविवर्जयेत् पाद्मेव्रतखंडे सौरोवावैष्णवोवान्योदे
वतांतरपूजकः नपूजाफलमाप्नोतिशिवरात्रिबहिर्मुखः तदुक्तंहेमाद्रौ माघासितेभू
तदिनंहिराजन्नुपैतियोगंयदिपंचदश्या जयाप्रयुक्तांनतुजातुकुर्याच्छिवस्यरात्रिंप्रिय

कृच्छ्रिवस्येति द्विमुहूर्तोभवेद्योगोवेधोमौहूर्तिकःस्मृतः तदस्माकंकर्तव्यमकर्तव्यं
चतद्दर्शयति श्रीमदाचार्यवाक्यैः फाल्गुनेहिशिवव्रतंकुर्वतस्त्वनुमोदयेत् कृष्णप
क्षचतुर्दश्यांसशल्यश्चेत्स्वयंचरेदिति तद्धेतुकवाक्यं कौर्मे परात्परतरंयांतिनारायण
परायणाः नतेतत्रगमिष्यंतियेद्विषंतिमहेश्वरमिति सशल्यंप्रत्यपिपाद्मेनिषेधविधि
र्दृश्यते द्रव्यमन्नंफलंतोयंशिवस्वंनस्पृशेत्क्वचित् निर्माल्यंनैवलंघेत्तकूपेसर्वंविनि
क्षिपेत् अन्यथास्वकृतारिक्तःसर्वथानरकंव्रजेत् नाराधयेदनन्यस्तुदेवतांतरमद्वि
षन्निति तथामहाभारतेश्रीकृष्णः नान्यंदेवंनमस्कुर्यान्नान्यंदेवंनिरीक्षयेत् च
क्रांकितःसदातिष्ठेन्मद्भक्तःपांडुनंदनेति तथापाद्मे नारायणात्परोदेवोनास्तिमु
क्तिप्रदोनृणाम् नारायणाद्देवदेवादन्येषामर्चनंनतु इति वैष्णवोयदिव्रतंकुर्यात्त
दातत्पूजनंतुश्रीकृष्णमूर्त्तावेवतद्भिन्नेकृते पूर्ववाक्यविरोधःस्यात् विनाभस्मत्रि
पुंड्रेणविनारुद्राक्षमालया पूजितोपिमहादेवोनस्यात्तस्यफलप्रद इतिलिंगपुराणो-

क्तफलाभावाच्च यद्वातद्दिनेशिवनाभेशालिग्रामेतस्यविशेषपूजनंकुर्यात् अग्राह्यंशि
वनैवेद्यंपत्रंपुष्पंफलंजलम् शालिग्रामशिलास्पर्शात्सर्वंयातिपवित्रतामितिस्कांदे शा
लिग्रामशिलायांशिवनाभेयदाशिवपूजाक्रियतेतदानैवेद्यादिग्रहणेनदोष इतिराम-
चंद्रभट्टाः प्रसंगादिदमप्युक्तं तत्रशुक्लैकादशीसामर्दकी तदुक्तंप्रभासखंडे क्षी
रोदेमथ्यमानेतुयदावृक्षःसमुत्थितः आमर्देदेवदैत्यानांतेनसामर्दकीस्मृतेति त
स्यांधातृच्छायायांश्रीराधाकृष्णपूजनं तत्सहितंप्रदक्षिणांचकुर्यात् तच्चोक्तंभविष्यो
त्तरे फाल्गुनेमासिशुक्लायामेकादश्यांजनार्दनः वसत्यामलकेवृक्षेलक्ष्म्यासहजग
त्पतिः तत्सन्निधौततःपूजांप्रदक्षिणांचकारयेदिति एतत्विशेषविधिंकर्तुंयदीच्छा
तदार्थपंचकेद्दस्वाकर्तव्यं तत्रपौर्णिमास्यांदोलोत्सवःकार्यः तदुक्तंश्रीमत्कुमारैः फा
ल्गुनस्यचराकायांमंडयेद्दोलमंडपमिति तथाब्रह्मपुराणे तपसिमासिराकायांयदोत्त
राफाल्गुनीभवेत् तदादोलोत्सवःकार्यस्तत्रश्रीपुरुषोत्तमइति साचविद्धाधिकेपरेद्युरे

वक्रऋक्षाभावेतिथावेवकार्यः ऋक्षाभावेतिथौकार्यासदासाप्रीतयेममेतिस्कांदोक्तेः ति
थिःशरीरंतिथिरेवकारणंतिथिःप्रमाणंतिथिरेवसाधनमिति छल्लोक्त्यातिथिरेवतन्मूल-
कत्वाच्च तिथ्यभावेतुनक्षत्रमात्रेणनतदुत्सवः कर्तुंशक्यः तिथिष्वविद्यमानेषुकर्मकुर्वं
तियेनराः वृथाभवेत्कृतंतस्यचात्मानंनरकंनयेत् इतिगर्गोक्तेः इतिफाल्गुनकृत्यं
अथचैत्रकृत्यंप्रदर्शयति तत्रकृष्णाप्रतिपद्यापिदोलोत्सवःकार्यः अयंतुलोकप्रसिद्ध
त्वात् साचप्रतिपदोदयकीग्राह्या प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवाविति भविष्यो-
क्तेः भविष्योक्तेः दिनद्वयेतथात्वेपिपूर्वाप्रतिपद्युदयोयत्रदिनद्वयेपिवर्तते तत्रोत्सवा
दौपूर्वैववृद्धौसाम्यक्षयापिचेति भृगुवाक्यात् इत्यत्रसाम्यक्षयेति विशेषणाद्विन्हस
मन्यूनयुक्तेपिसैव इतिविवक्षितमेव तत्रतैलाभ्यंगः वत्सरादौवसंतादौबलिराज्येत
थैवच तैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यते इतिवृद्धवासिष्ठवचनात् प्रसंगादिदमुक्त
म् तत्रकृष्णात्रयोदशी शतभिषग्युतावारुणी तत्रगंगास्नानंमहाफलम् तदुक्तंस्कांदे

वारुणेनसमायुक्तामधौकृष्णात्रयोदशी गंगायांयदिलभ्येतकोटिसूर्यग्रहैःसमा श
निवारसमायुक्तासामहावारुणीस्मृता गंगायांयदिलभ्येतकोटिसूर्यग्रहैःसमा शुभ
योगसमायुक्ताशनौशतभिषायदि महामहेतिविख्याताञ्त्रिकोटिकुलसुन्दरेदिति प्रसंगा
दिदमप्युक्तम् तत्रशुक्लनवम्यांश्रीमद्रघुकुलकैरवप्रकाशकानंतानवद्यगुणगणमंदि
रश्रीमद्रामचंद्रावतारणम् तच्चोक्तमगस्त्यसंहितायाम् चैत्रमासेनवम्यांतुशुक्लायां
हरिरघूद्वहः प्रादुरासीत्पुराब्रह्मन्परब्रह्मैवकेवलम् तस्मिन्दिनेप्रकर्तव्यमुपवासव्रतं
सदेति मधुमासेसितेपक्षेश्रीरामनवमीव्रतम् एकादश्यांभवेद्दोलाद्वादश्यांदमना
र्पणमिति श्रीमत्सनकादिवाक्यम् तद्व्रतस्यनित्यत्वमप्यगस्त्यसंहितायामुक्तम् प्रा
प्तेश्रीरामनवमीदिनेभुंक्तेविमूढधीः कुंभीपाकेषुघोरेषुपच्यतेनात्रसंशयः नित्यमे
वभवेत्तस्माच्छ्रीरामनवमीव्रतमिति सातुपूर्वविधवतीत्याज्या तदुक्तंश्रीमन्नारदपंच-
रात्रे अष्टमीसहितात्याज्यानारायणपरायणैः सर्वसिद्धांतविज्ञानवैष्णवानांविदुर्बुधाः

पूर्वंवेधतिथित्यागोवैष्णवस्यहिलक्षणम् तस्मादुत्तरसंयोगिमतंवैष्णविकव्रतम् सर्वत्र तफलावाप्त्यैनवमींदशमीयुताम् उपोष्यहरिसंतुष्टिंविदध्याच्छुद्धवैष्णवइति अत्र-शुद्धवैष्णवइतिस्फुटतरविशेषणेन नारायणपरायणैरितिगर्भितविशेषण विशेषेणच सर्ववैष्णवानांशुद्धतद्व्रतानुष्ठेयत्वंसिद्धंस्मार्तानांतुविद्धतद्व्रतानुष्ठेयत्वविभागंच यथा दशमीशेषसंयुक्तोयदिस्यादरुणोदयः नैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतमिति गारुडोक्त्या वैष्णवपदावलंबनेन वैष्णवस्मार्तविभागस्तेनव्यवस्थाकालमाधवे एकादशीनिर्णयेविद्यारण्येनकृतातथात्रापितुल्यत्वात् तथागस्त्यसंहितायामपि नवमीचाष्टमीविद्धात्याज्याविष्णुपरायणैः उपोषणंनवम्यांवैदशम्यामेव पारणमिति किंच यदाविद्धाधिकपक्षेपरदिनेकिंचिन्नवमीवर्तते तदानपूर्वदिनेऽष्टमीविद्धायांतद्व्रतंतथापारणापिनवृद्धिगतनवम्यामितिद्वयोर्निवारणाय उपोषणंनवम्यांवैदशम्यामेवपारणमिति विशेषणद्वयंतूक्तमनेनैवशुद्धाधिकविषयोपि

कथितस्तथापिस्फुटतरज्ञानायतद्विशदयति शुद्धाधिकपक्षेतिथ्यंतेपारणंकर्तव्यमित्य
भिप्रायेण यदाकिंचिन्मात्रानवमीपरदिनेवर्तते तत्रपारणानिवारणायतथैकादशी
व्रतांगदशम्यामेकभुक्तविधिविशेषपालनायचदशम्यामेवपारणमित्यूह्यम् ननु-
क्वचिच्छुद्धाभावे विद्धापिग्राह्येति प्रतिपारणानियमवाक्यानुरोधादितिचेन्न ज
न्माष्टम्यादावपिस्वजातित्वेनतथाप्रसंगात् प्रकृतेएवनियमकरणेतुमानाभावात्
तस्मान्नियमस्तुपूर्वोक्तविद्धाधिकादिसंभवाभिप्रायेणबोध्यः असंभवेतुतत्त्याग
निमित्तदोषोदयमपिनपूर्ववेधस्यसर्वथाहेयत्वात् विद्धाविधायकविशेषवाक्यस्या
श्रवणाच्चपरदिनेकेवलदशम्यामेवतद्व्रतानुष्ठानंसंप्रतिपन्नम् ननुकदाचिद्रामनव
मीव्रतानंतरंपरदिनेएवैकादशीव्रतंस्यात्तदारामनवमीव्रतस्यासमाप्तिरूपविधिलो
पः पारणांतंव्रतंज्ञेयंव्रतांतेविप्रभोजनम् असंप्राप्तेव्रतेपूर्वेनैवकुर्याद्व्रतांतरमिति
विष्णुधर्मोत्तरवाक्यानुरोधादितिचेन्न नचात्रविधिलोपःस्यादुभयोर्दैवतंहरिरिति

नारदीयवचोभिस्तदुभयव्रतस्यैकदैवतत्त्वेनविरोधाभावात् ननु यदातुनवमी
क्षयोग्राह्याविद्धापिसातदा दशम्यामेवपारणानुज्ञानान्नात्रसंशय इत्यर्थपंचके
औदुंबरर्ष्युक्तिस्तदा सर्वसिद्धांतविज्ञानंवैष्णवानांविदुर्बुधाः पूर्वविद्धतिथित्यागो
वैष्णवस्यहिलक्षणम् तस्मादुत्तरसंयोगिमतंवैष्णविकव्रतमिति श्रीमन्नारदपंच
रात्रोक्तिश्चस्मृतिशिष्टयोः परस्परविरोधेसत्यत्रकिंकर्तव्यमितिचेत्तत्रोच्यते स्मृति
वेदविरोधेनपरित्याज्यायथाभवेत् तथैवलौकिकंवाक्यंस्मृतिबाधेपरित्यजेदिति
चतुर्विंशतिमनूक्त्यास्मृत्यादिविरोधेलौकिकवाक्यस्यानादरत्वादष्टमीविद्धंपूर्वदि
नंत्यक्त्वाकेवलदशम्यामेवतद्व्रतंकर्तव्यमितियावत् लौकिकमितिस्वशिष्टपरंपरेति
नन्वेतत्कृतेशिष्टस्यानादररूपोदोषःस्यादितिचेन्न श्रुतिस्मृत्यादिष्ववशिष्टस्य
हृदयत्वात् भ्रांतिवाक्यस्यानादरत्वेननशिष्टस्यानादरःस्यात् तच्चोक्तंश्रीगंगारा
मगोडेन शिष्टोक्तिपरित्यागेननशिष्टदूषणंभवेत् शब्दब्रह्माश्रयाःशिष्टास्तेनैवसु

स्वमाप्नुयात् अहंकारविमुक्तस्तु सदाश्रुत्यानुवर्तीयः शिक्षातदुक्ता आचारश्रुक्तेन प्रद्द
ष्यति स्वाधिकारविशेषेणयच्छास्त्रेषुविधीयते तदेवधर्ममित्याहुरधर्मस्तद्विपर्यय
इतिबहुविस्तरेणेत्यलम् किंच चैत्रशुद्धेतुनवमीपुनर्वसुयुतायदि असौमध्याह्नयो
गेनमहापुण्यतमाभवेदित्यगस्त्यसंहितोक्तेः पुनर्वसुयोगस्यानित्यत्वेप्राप्ते अत्रोच्य
ते मध्यान्हयोगेनेतिविशेषणेनशुद्धायांनवम्यांतद्योगोयदाभवतितदातस्यनित्यत्वं
स्यान्नतुविद्धायाम् ऋक्षाभावेतिथौकार्यासदासाप्रीतयेममेतिस्कांदोक्त्यापुनर्व
स्वभावेप्यविद्धेनवम्यांविद्धेदशम्यांचतद्व्रतंकार्यमितिसिद्धांतंज्ञेयम् इतिनिर्णयमु-
क्त्वाविधिंचदर्शयति श्रीमदाचार्यवाक्यचतुष्टयेन अथायंविधिरष्टम्यांदंतधावनपू
र्वकं हविष्यान्नैकभोजनभूशयनादिनायतिः श्रीरामंचिंतयंस्तिष्ठन्मध्यान्हेनवमी
दिने संतश्चाहूयसूतिकागृहादिकंविधायच रामाभिभावमात्मनाविभाव्यवैष्णवो
त्तमः महास्नानंततःपंचामृतेनविधिनार्पयेत् महानैवेद्यमुत्कृष्टैर्महोत्सवंचकारये

दिति तत्रशुक्लैकादश्यां पुष्पदोलोत्सवः कार्यः तदुक्तं गारुडे चैत्रेमासिसितेपक्षेदक्षिणा
भिमुखंहरिम् दोलारूढंसमभ्यर्च्यमासमादोलयेत्कलाविति तथाब्राह्मे चैत्रमासस्य
शुक्लायामेकादश्यांतुवैष्णवैः आंदोलनीयोदेवेशः सलक्ष्मीको महोत्सवैरिति अन्व-
यव्यतिरेकाभ्यांतस्यनित्यत्वमुक्तं गारुडे दक्षिणाभिमुखंदेवंदोलारूढंस्मरेश्वरम् स
कृद्दृष्ट्वातुगोविंदंमुच्यतेब्रह्महत्यया सर्वपुण्यफलावाप्तिर्निमेषैकेनजायते दोला
संस्थंतुयेकृष्णंपश्यंतिमधुमाधवे इति व्यतिरेकंतुकुमाराश्चाहुः एकादशीवारसुपे
त्यशुक्लेपक्षेनचैत्रेकुरुतेयथार्हम् दोलोत्सवंकृष्णसमर्चकोयः पूजामृषातस्य बहिर्मु
खस्येति तथापाद्मे ऊर्जेव्रतंमधौदोलांश्रावणेतंतुपर्वच चैत्रेतुदमनारोपमकुर्वाणो
व्रजत्यधइति तत्रशुक्लद्वादश्यांदमनोत्सवः श्रीमत्कुमाराः मधुमासेसितेपक्षेद्वा
दश्यांदमनोत्सवम् आगमोक्तेनमार्गेणकुर्याद्भक्तोह्यतंद्रित इति सचपारणादिनेद्वा
दश्यभावेतुत्रयोदश्यांकर्तव्यः तदुक्तंपाद्मे पारणाहेनलभ्येतद्वादशीघटिकाप्यपि

तदात्रयोदशीग्राह्यापवित्रादमनार्पणे इति विधिस्त्वर्थपंचकेद्रष्टव्यः इतिचैत्रकृत्यं
अथवैशाखकृत्यं तत्रप्रातःस्नानंविष्णुस्मृतिपाद्मयोरुक्तम् तुलामकरमेषेषुप्रा-
तःस्नानंविधीयते हविष्यंब्रह्मचर्यंचमहापातकनाशनमिति अत्रसौरमासउक्तः
अन्यदपिपक्षद्वयमुक्तंपाद्मे मधुमासस्यशुक्लायामेकादश्यामुपोषितः पंचदश्यां
चभोवीरमेषसंक्रमणेपिवा वैशाखस्नाननियमंब्राह्मणानामनुज्ञया मधुसूदनम-
भ्यर्च्यकुर्यात्संकल्पपूर्वकमिति तत्रमंत्रः वैशाखंसकलंमासंमेषसंक्रमणेरवौ प्रा-
तःसनियमःस्नास्येप्रीयतांमधुसूदन इतिसामान्यकृत्यंप्रदर्श्यविशेषकृत्यंदर्शयति
तत्रशुक्लतृतीयायांश्रीमत्परशुरामावतरणम् तदुक्तंस्कंदभविष्ययोः वैशाखस्यसि
तेपक्षेतृतीयायांपुनर्वसौ निशायांप्रथमेयामेरामाख्यःसमयेहरिः सोच्चगैःषड्ग्रहै
र्युक्तेमिथुनेराहुसंस्थिते रेणुकायास्तुयोगर्भादवतीर्णोहरिःस्वयमिति अथअक्ष
तृतीयाकृत्यांतरमपिदर्शयति मात्स्ये वैशाखेमासिशुक्लायांतृतीयायांजनार्दनः

यवानुत्पादयामासयुगंचक्रुतवान्कृतं ब्रह्मलोकात्त्रिपथगांपृथिव्यामवतारयन् तस्यां-
कार्योयवैर्होमोयवैर्विष्णुंसमर्चयेत् यवान्दद्याद्द्विजातिभ्यःप्रयतःप्राशयेद्यवान् इतिपा
द्मेचश्रीवाराहधरणीसंवादे त्रेतायुगंतृतीयायांशुक्लायांमासिमाधवे प्रवृत्तंचत्रयीध
र्माःप्रवृत्तास्तेप्रवर्तिताः अक्षयासोच्यतेलोकेतृतीयाहरिवल्लभा स्नानेदानेऽर्चने
श्राद्धेजपेपूर्वजतर्पणे येर्चयंतियवैर्विष्णुंश्राद्धंकुर्वंतियत्नतः तस्यांददतिदानानि
धन्यास्तेधार्मिकानरा इति चंदनोत्सवमपितत्रैवकुर्यात् तच्चोक्तंश्रीमन्नारदपंचरा
त्रे वैशाखस्यासितेपक्षेतृतीयाचाक्षसंज्ञिका तत्रमांलेपयेद्गन्धलेपनैरपिशोभनैः
प्रीतयेममयःकुर्यादुत्सवान्ममशाश्वतान् चतुर्वर्गप्रदाह्येतेप्रत्येकंतेप्रकीर्तिता इति
अथतद्दिनंनिर्णीयते द्वयोरप्युत्सवनिमित्ते साविद्धाधिकेतुपरेद्युरेव तदुक्तंस्कंदपुरा-
णे वैशाखस्यतृतीयायापूर्वविद्धातुनिंदिता तस्मात्सर्वप्रयत्नेनचतुर्थीसंयुताशुभा
तथावसिष्ठसंहितायां रोहिणीबुधयुक्तापिपूर्वविद्धाविवर्जिता भक्त्याकृतापिसंमो

हात्पुण्यंहंतिपुराकृतमित्यादिवचनैः पूर्वविद्धस्यसर्वथापरिहार्यत्वात् कलामात्रेपिसापू
र्वा तत्रोत्सवौकर्तव्यौ तत्रशुक्लचतुर्दश्यांप्रचंडोद्दंडदोर्दंडबलोत्कर्षदनुजेंद्रमदद्रावकश्री
प्रह्लादानुग्रहार्द्रहृच्छ्रीमन्नृसिंहस्यव्रतपूर्वकजन्मोत्सवःकार्यः तदुक्तंनारसिंहे वैशा
खशुक्लपक्षस्यचतुर्दश्यांसमारभेत् मज्जन्मसंभवंपुण्यंव्रतंपापप्रणाशनम् स्वाती
नक्षत्रयोगेचशनिवारेह्यमद्व्रतमिति तथास्कांदे वैशाखस्यचतुर्दश्यांसोमवारेनिल
र्क्षके अवतारोनृसिंहस्यप्रदोषसमयेद्विजा इति साविद्धाचेत्परदिनेकर्तव्या अनंगे
नसमायुक्तानसोपोष्याचतुर्दशी पूर्णायुक्तांतुतांकुर्यान्नारसिंहस्यतुष्टये यःकरो
तिनरोमोहात्कामविद्धांचतुर्दशीम् धनापत्यैर्वियुज्येततस्मात्तांपरिवर्जयेदिति ना
रसिंहोक्तेः तद्विधिंश्रीमदाचार्यवाक्यचतुष्टयेनदर्शयति चतुर्दशीमहाव्रतेतत्रायंवि
धिरुच्यते प्रातःस्नानादिकंकृत्वामंदिरसंस्क्रियांशुभां आहूयवैष्णवान्संतःसंध्या
कालेह्निनृहरेः जन्मसंभाव्यविधिनास्नाप्यपंचामृतादिभिः महानैवेद्यमर्पयेत्सर्वं

कृत्यंचकारयेत् लीलामुद्दीपयेद्धरेर्वैष्णवशास्त्ररीतितः नृसिंहचरिताख्यानंलीलानृ
सिंहसन्निधौ रात्रौजागरणंकुर्याद्गीतनृत्यादिभिर्नरैरिति तत्रपौर्णमास्यांकृत्यंदर्शय-
ति श्रीमन्नारदवाक्यद्वयेन वैशाखेपौर्णमास्यांवैजलस्थंजगदीश्वरम् पूजयेद्वैष्णा-
वोभक्त्याकृतोत्साहंमुदान्वितः गीतवाद्यपताकाद्यैःकृत्वापुण्यमहोत्सवम् ज्येष्ठ-
स्यैकादशीशुक्लायजेत्तावत्प्रहर्षित इति अथसमस्तवैशाखाशक्तकृत्यं पाद्मेयम
ब्राह्मणसंवादे त्रयोदश्यांचतुर्दश्यांवैशाख्यांचदिनत्रयम् सर्वाशक्तोपिविधिना
नारीवापुरुषोपिवा पूर्वोक्तनियमैर्युक्तःप्रातःस्नात्वास्वशक्तितः विमुक्तःपातकैः
सर्वैःस्वर्गमक्षयमश्नुते वैशाख्यामपिशक्त्यावाभोजयेद्ब्राह्मणान्दश इतिवैशाख
कृत्यं अथज्येष्ठकृत्यं ज्येष्ठेमासितुसंपूर्णेजलमध्येहरिंश्रिया सेवयोपचरेन्नित्य
मुपचारैरुपार्जितैरिति श्रीकुमारोक्तेः तत्रशुक्लादशमीदशहरेति तदुक्तंवाराहे द
शम्यांशुक्लपक्षेतुज्येष्ठेमासिकुजेहनि अवतीर्णायतःस्वर्गाद्धस्तर्क्षेचसरिद्वरा ह

रतेदशपापानितस्माद्दशहरास्मृता तस्यांस्नानंप्रकुर्वीत दानंचैवविशेषत इतिदशयो
गास्तुस्कांदेभिहिताः ज्येष्ठेमासिसितेपक्षेदशम्यांबुधहस्तयोः गरानंदेव्यतीपाते-
कन्याचंद्रेवृषेरवौ दशयोगेनरःस्नात्वासर्वपापैःप्रमुच्यते इति इहबुधभौमयोःक
ल्पभेदेनव्यवस्थासापूर्वापरा चेद्यत्रयोगबाहुल्यंसाग्राह्या तस्यांनारायण्यैगंगायै
नमोनमः इति मंत्रेणगंगांपूजयित्वा नारायणंमहेशंचब्रह्माणंभास्करंतथा भगी
रथंहिमवंतंगंधपुष्पादिभिःपूजयित्वादशफलानि दशदीपान्दशप्रसृतितिलान्गं-
गायैनमइतिमंत्रेणदत्वा दशसक्तुपिंडान्गुडपिंडान्जलेक्षिप्त्वा मत्स्यकच्छपमंडू
कादीनभ्यर्च्यजलेक्षिपेत् एवंकृत्वाविधानेनवित्तशाठ्यविवर्जितः दशजन्मार्जि
तैःपापैर्मुच्यतेनात्रसंशय इति गंगायाअभावेऽन्यस्यांसरितिकार्यं तदुक्तंस्कांदे
याःकाश्चित्सरितःप्राप्यदद्याद्दर्घ्यंतिलोदकं मुच्यतेदशभिःपापैःसमहापातकैरपि
दशपापानितुस्कांदेऽभिहितानि अदत्तानामुपादानंहिंसाचैवाविधानतः परदारो

पसेवाचकायिकंत्रिविधंस्मृतमिति पारुष्यमनृतंचैवपैशून्यंचापिसर्वशः असंबद्धप्र
लापश्चवाङ्मयंस्याच्चतुर्विधम् परद्रव्येष्वभिध्यानंमनसानिष्टचिंतनम् वितथाभिनि
वेशश्चमानसंत्रिविधंस्मृतमिति इतिसर्वेषांकृत्यमुक्त्का अस्माकंविशेषतस्तत्रकर्तव्यं चं
दनकर्पूरकुंकुमघर्षितेनशैत्यजलेनश्रीराधाकृष्णौस्नाप्यविशेषतः शैत्यगुणायुक्तान्नैवे
द्यान्समर्पयेत् प्रसंगादुक्तम् तत्रशुक्लैकादशीनिर्जलेति तदुक्तंस्कांदे ज्येष्ठेमासिनृपश्रेष्ठ
याशुक्लैकादशीभवेत् निर्जलांतामुपोष्यात्रजलकुंभान्सशर्करान् प्रदायविप्रमुख्ये
भ्योमादत्तेविष्णुसन्निधौ तथापाद्मे व्यासः वृषस्थेमिथुनस्थेर्केशुक्लाह्येकादशीय
दा ज्येष्ठेमासिप्रयत्नेनसोपोष्याजलवर्जिता स्नानेचाचमनेचैववर्जयित्वोदकादिकं
अप्रयत्नादवाप्नोतिद्वादशद्वादशीव्रतमिति तत्रपूर्णमास्यांज्येष्ठास्नानं तदुक्तंविष्णु
ना ज्येष्ठीज्येष्ठायुताचस्यात्तस्यांतान्परपुमानिति सचमूलविद्धंनिषिद्धम् मूलविद्धान
कर्तव्या ज्येष्ठाकामविनाशिनीतिस्मृतेः अथाषाढकृत्यं तत्रशुक्लद्वितीयायांरथो-

त्सवः कार्यः आषाढस्यसितेपक्षेद्वितीयापुष्यसंयुता तस्यांरथेसमारोप्यरामंमांभद्र
यासह यात्रोत्सवंप्रवर्त्याथप्रीणयेतद्विजान्बहूनितिस्कंदपुराणोक्तेः ऋक्षाभावेसति
तिथ्यामेवकर्तव्यः ऋक्षाभावेतिथौकार्यासदासाप्रीतयेममेति तत्रैवोक्तेः तिथ्यभा
वेतुननक्षत्रेणतदुत्सवः कर्तुंशक्त्यः तिथिष्वविद्यमानेषुकर्मकुर्वंतियेनराः वृथाभवे
त्कृतंतस्यचात्मानंनरकंनयेदिति गार्ग्योक्त्या तिथिंविनातन्निषेधात् विद्धाधिकेतुप
रदिनेएव पूर्वविद्धादिनेदत्तंयत्किंचित्पूजनंचवै नैवगृह्णातिवैकुंठःपूजांतद्दिनसंभवा
मितिनारदीयवचनात् तत्रशुक्लैकादश्यांशयनोत्सवःकार्यः तदुक्तंब्राह्मे एकाद-
श्यांतुशुक्लायामाषाढेभगवान्हरिः भुजंगशयनेशेतेक्षीरार्णवजलेसदा इतिश्रीम-
दाचार्यवाक्यपंचकेनतद्विधिंदर्शयति राधाकृष्णौतदासम्यक्संपूज्याहूयवैष्णवा
न् तोषयित्वायथाविधिवसनैश्चंदनादिभिः सुछत्रचामरध्वजपताकासहितंहरिम्
नरयानैर्जलाभ्याशंचानयेन्नृत्यपूर्वकम् दुग्धंचतत्रभूयिष्ठंजलालाभेनिधापयेत् गृ

हेहिभावेतन्नीरंसर्वोपचारपूर्वकम् तीरेपुष्पांजलिंदत्वासिंहासनेस्थितंहरिम् धूपादि
कोपहारांतान्दत्वार्थयेतमंत्रतः सुप्तेत्वयिजगन्नाथजगत्सुप्तंभवेदिदम् विबुद्धे तु-
विबुद्ध्येतप्रसन्नोमेभवाच्युत इति शेषपर्यंकवर्येस्मिन्फणामणिगणामले श्वेतद्वी-
पांतरेदेवकुरुनिद्रांनमोऽस्तुते इति तत्रापिशंखचक्रादिधारणम् तदुक्तंभविष्ये
शयिन्यांचैवबोधिन्यांचक्रतीर्थेतथैवच शंखचक्रविधानेनवन्हिपूतोभवेन्नर इतित
च्चनित्यं अग्निहोत्रंयथानित्यंवेदस्याध्ययनंयथा ब्राह्मणस्यतथैवेदंतप्तचक्रादि
धारणमितिपद्मपुराणोक्तेः विनायज्ञोपवीतेनविनाचक्रादिधारणात् सद्विजोरा-
क्षसोज्ञेयः श्रौतकर्मबहिःकृत इतिहारीतस्मृत्युक्तेश्च श्रुतिश्चबह्वृचपरिशिष्टे अ
तप्ततनूर्नतदामोश्नुतेश्रृतासइद्वहंतस्तत्समासतेति छांदोगपरिशिष्टेच सहो
वाचयाज्ञवल्क्यस्तत्सुमानात्महितायप्रेम्णाहरिंभजेत् स्कन्श्लोकमौलेर्द्दर्माण्यंगे
ष्वग्निनाधत्तेशतपथो श्रुतिः ननु संप्रदायत्रयस्थानांवैष्णवानामपिद्वारकाया

व्यतिरिक्ततप्तचक्रादिधारणस्यादृष्टत्वाच्छास्त्रोल्लंघनरूपस्तेषांदोषःस्यादितिचेन्न
सत्यवार्ताब्रह्मचर्याद्यपगमेपातित्यभावश्रवणाद्गोपीचंदनादिशीतलमुद्राधारणस्य
शास्त्रेविहितत्वाच्च तदुक्तंश्रीमन्नारदपंचरात्रे यावच्चक्रांकधारीस्यात्तावत्संभव
तिस्वतः तस्माद्गृहस्थधर्मेणवर्तमानोद्विजोत्तमः चंदनांकधरोभूयाद्विष्णुमू-
र्तिःसधर्मवान् शीतांकधारीपुण्यात्मासर्ववर्णेषुसंस्थितः आश्रमेषुचसर्वेषुमंत्रे
णानेनसंभवेत् सद्धर्मगुणिनांशीतंशशीवास्मेस्फुदर्शनं तथामांत्वंपरित्राहिसं
सारपरितापत इति तत्रद्वादश्यांकेचिच्छ्रवणयोगवदनुराधायोगरहितायामेवपा
रणाकर्तव्या इत्याहुस्तन्न मैत्रंऋक्षंकृतेत्याज्यमिति वायुपुराणोक्त्यातत्कृतयुग
विषयत्वात् तत्रपौर्णमास्यांगुरुपूजा सामध्यान्हव्यापिनीग्राह्या दिनद्वयेतादृशी
चेत्परैव पूर्वोक्तनारदीयवाक्योपलंभात् अथश्रावणकृत्यंदर्शयति तत्रसुमुहूर्ते
प्रथमारभ्यश्रद्धाप्रमितानिदिनानिदोलोत्सवःकार्यः प्राप्तोपरमशारवाढ्यांन्यग्रो

धंशारविनांवरम् तत्रसांदोलिकाभिश्चेत्यादिहरिवंशे वर्षाकालप्रसंगेभगवतास्वय
मेवदोलिकोत्सवकृतत्वात्तदनुकरणप्रसक्तेः तत्रद्वादश्यांपवित्रारोपणोत्सवःकार्यः
शुक्लपक्षेनभोमासिद्वादश्यांवैष्णवोत्तमः पवित्रारोपणंकुर्याच्छुभतंतुमयंहरेरि
तिहारीतस्मृत्युक्तेः द्वादश्यांश्रावणेमासिसितेपक्षेपवित्रकं श्रीकृष्णायप्रदात
व्यंवैष्णवीभिश्चवैष्णवैरितिश्रीमन्नारदोक्तेश्च अत्रद्वादशीशब्दस्तुपारणाहेवि-
हितः श्रावणेद्वादशीशुक्लापारणादिनसंभवम् तस्यांनित्याविरोधेनपवित्राणिनि
रूपयेदितिश्रीमन्नारदपंचरात्रोक्त्या पारणाहनितत्कृत्यदर्शनात् अतएवपारणा
हेद्वादश्यभावेतु पद्मपुराणेऽभिहितः पारणाहेनलभ्येतद्वादशीघटिकापिचेत्
तदात्रयोदशीग्राह्यापवित्रादमनार्पणे इति केचिद्द्वादश्यांतद्विहितेप्येकादश्यामेव
तत्कर्तव्यमितिवदंतितन्न मानाभावात् एकादशीरुद्राणांद्वादशीकेशवस्यच इति
विष्णुरहस्योक्त्याएकादश्यादेवतांतरविषयत्वाच्च उक्ततिथिपरित्यागेतन्निमित्तदो

षात्तेश्च तत्राधिकारिणास्तुविष्णुरहस्ये ब्राह्मणःक्षत्रियोवैश्यस्तथास्त्रीशूद्रएवच
स्वधर्मावस्थिताःसर्वेभक्ताःकुर्युःपवित्रकम् सचनित्यः विधिनाशास्त्रदृष्टेनयोनकु
र्यात्पवित्रकम् हरंतिराक्षसास्तस्यवर्षपूजादिकंफलमितिबह्वृचपरिशिष्टोक्तेः श्रीम
दाचार्यवाक्यैस्तन्निर्माणविधिंदर्शयति क्षौमकौशेयकार्पासैःपवित्राणियथारुचि
वैष्णवीकर्तितैःसूत्रैर्यथाशक्त्यैवकारयेत् तत्रत्रिगुणितंसूत्रंत्रिगुणीकृत्यसंस्कृतं
पंचगव्येनकवचमंत्रेणाद्भिःसमुक्षयेत् सूत्रंश्रीकृष्णमंत्रेणाष्टोत्तरशतसंख्यया प्र-
जप्यकृष्णगायत्र्याशंखोदकेनचोक्षयेत् नंदपुत्रायविद्महेराधाप्रियायधीमहि
तन्नःकृष्णःप्रचोदयादिति श्रीकृष्णत्रिपदी सूत्रंशुष्कंततःकृत्वानिर्मापयेत्पवित्र
कम् तत्रश्रीकृष्णजानूरुनाभिप्रमाणकानिच क्रमेणत्रीणिचाद्यंतुसाष्टशतेनका
रयेत् चतुःपंचशतामध्यंकनिष्ठंसप्तविंशतेरिति ग्रंथिप्रमाणानिविष्णुरहस्ये क
निष्ठेद्वादशप्रोक्तामध्येतुद्विगुणामताः त्रिगुणाश्चोत्तमेप्रोक्ताग्रंथयश्चपवित्रके इति

पवित्रसमर्पणमंत्रः कृष्णकृष्णनमस्तुभ्यंगृहाणेदंपवित्रकम् पवित्रीकरणार्थायवर्षपू
जाफलप्रद इति तत्रपौर्णमास्यांरक्षाबंधनम् तदुक्तंभविष्योत्तरे ततोपराह्णसम-
येकुर्यात्पोटलिकांशुभाम् कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चितामिति तत्रमंत्रः
येनबद्धोबलीराजादानवेंद्रोमहाबलः तेनत्वामभिबध्नामिरक्षेमाचलमाचल इति इ
तिश्रावणकृत्यं अथभाद्रपदकृत्यं तत्रकृष्णाष्टम्यांश्रीमत्सरममंगलगुणगणमंदि
रसहजलावण्याकरब्रह्मादिवंदितचरणारविंदश्रीमत्परमवैष्णवोपास्यश्रीमत्कृष्णा
जन्मोत्सवोनिरूप्यते तदुक्तंगौत्तमीयतंत्रे अथभाद्रासिताष्टम्यांप्रादुरासीत्स्वयं
हरिः ब्रह्मणाप्रार्थितःपूर्वंदेवक्यांकृपयाविभुः राजन्यैर्ब्राह्मणैर्वैश्यैःशूद्रैश्चैवस्व
शक्तितः उपवासंप्रकुर्वीतनभोक्तव्यंकदाचनेति उपवासस्यव्यतिरेकेण नित्यत्वंद
र्शयति विष्णुरहस्ये शूद्रान्नेनतुयत्पापंशवहस्तस्यभोजने तत्पापंलभ्यतेपुंभि
र्जयंत्यांभोजनेकृतेइति तथास्कांदे येनकुर्वंतिजानंतःकृष्णजन्माष्टमीव्रतम् ते

भवंतिनराःप्राज्ञव्यालव्याघ्राश्चकानने कृष्णाष्टमीदिनेप्राप्तेयेनभुक्तंद्विजोत्तम त्रैलो-
क्यसंभवंपापंभुक्तंतेननसंशयः अन्वयेनतन्माहात्म्यंचस्कांदे कृष्णजन्माष्टमीलो
केप्रसिद्धापापनाशिनी क्रतुकोटिसमाह्येषातीर्थायुतशतैःसमा कापिलंगोसह-
स्रंतुयोददातिदिनेदिने तत्फलंसमवाप्नोतिजयंत्याःसमुपोषणे वर्षेवर्षेतुकर्तव्यातु
ष्ट्यर्थंचक्रधारिणः प्राजापत्यर्क्षसंयुक्तानभस्येचासिताष्टमी आजन्मोपार्जितंपा
पंप्रहरार्द्धेविलीयते रात्रौजागरणेविप्रदृष्टेनश्यतिदेहिनामित्यादि साकीदृशीकर्त
व्येत्यपेक्षायामाह विष्णुरहस्ये मुहूर्तमप्यहोरात्रेयस्मिन्युक्तंतुलभ्यते अष्टम्यां
रोहिणीऋक्षंतासुपुण्यमुपावसेदिति आग्नेये अर्द्धरात्रमतिक्रम्यसप्तमीदृश्य
तेयदि विनापिऋक्षंकर्तव्यंनवम्यामष्टमीव्रतम् ब्रह्मवैवर्त्ते वर्जनीयाप्रयत्नेनस
प्तमीसंयुताष्टमी विनाऋक्षेणकर्तव्यानवमीसंयुताष्टमी पूर्वमिश्रासदात्याज्या
प्राजापत्यर्क्षसंयुता इतिस्कांदे पलवेधेपिविप्रेंद्रसप्तम्यांत्वष्टमींत्यजेत् स्मराया-

विंदुनास्पृष्टंगंगांभः कलशंयथा इतिपाद्मे पूर्वविद्धाष्टमीयातुउदयेनवमीदिने मु
हूर्तमपिसंयुक्तासंपूर्णासाष्टमीभवेत् कलाकाष्ठामुहूर्तापियदाकृष्णाष्टमीतिथिः न
वम्यासाग्राह्यास्यात्सप्तमीसंयुतानहि पंचगव्यंयथाशुद्धंनग्राह्यंमद्यसंयुतं रवि
विद्धातथात्याज्यारोहिणीसहितायदि भविष्ये शैवाःसौरागाणापत्याःशाक्ताश्चा
न्योपसेवकाः पूर्वविद्धानिव्रतानिकुर्वंतिकारयंतिच विष्णुव्रतंसदाविप्रपूर्वविद्धं
नकारयेदितियाज्ञवल्क्यः संपूर्णाचार्द्धरात्रेतुरोहिणीयदिलभ्यते कर्तव्यासाप्रय
त्नेनपूर्वविद्धांविवर्जयेदिति विष्णुधर्मे अष्टमीकृष्णपक्षस्यरोहिणीसंयुतायदा
भवेत्प्रौष्ठपदेमासिजयंतीनामसास्मृता प्राजापत्यर्क्षसहिताकृष्णानभसिचाष्ट
मी मुहूर्तमपिलभ्येत्तसैवोपोष्यामहाफला इति शुद्धाष्टम्यभावेकेवलनवम्यामे
वतद्व्रतम् तदुक्तंपाद्मे तिथिक्षयेचविद्धायांकर्त्तव्यंनवमीव्रतमिति गृह्णीयान्नि
यमंपूर्वंदंतधावनपूर्वकं नियमात्फलमाप्नोतिनश्रेयोनियमंविना इतिस्कांदोक्ते

निर्यमस्यावश्यकत्वात्तद्वाक्यैर्निर्यमंदर्शयति आदौगुरुगृहेगत्वापश्चान्नियममाचरे
त् स्वशिरःपादयोःकृत्वापादौस्पृष्ट्वाचमौलिना कृतांजलिपुटोभूत्वाश्रीगुरुंप्रार्थये
त्ततः नियमंदेहिभोस्वामिन्नष्टम्यांचममप्रभो इतिगुरूक्तमंत्रेणस्वीकुर्यान्नियमंबु
धः मंत्रः जयंत्यांतुनिराहारःश्वोभूतेपरमेश्वर भोक्ष्यामिपुंडरीकाक्षशरणंचरणौ
तव उपोषितस्तुमध्याह्नेस्नात्वाकृष्णातिलैःशुचिः कृत्वामूर्ध्निफलंधात्र्यामहापुण्य
विवृद्धये कृत्वामाध्याह्निकंकर्मस्थापयेदव्रणंघटम् पंचरत्नसमायुक्तंपवित्रोदक
पूरितं स्रक्चंदनंगंधयुक्तंकर्पूरागरुवासितम् स्रक्धूपवासितंशुभ्रंपुष्पमालाभिशो
भितम् तस्योपरिन्यसेत्पात्रंसौवर्णंश्लक्ष्णयान्वितं तदलाभेतुवैरूप्यंताम्रंवेणुमयं
मुने तस्योपरिन्यसेदेवंहैमंलक्षणसंयुतम् ददमानातुपुत्रस्यस्तनंवैविस्मितान-
ना पिबमानःस्तनंसोथकुचाग्रंपाणिनास्पृशन् अवलोकमानःप्रेम्णामुखंमातु
र्मुहुर्मुहुः कृत्वाचैवतुवैकुंठंमात्रासहजगद्गुरुम् क्षीरादिस्नपनंकृत्वादेवमावाहये

ततः मंत्रः एहिएहिजगन्नाथगोलोकात्पुरुषोत्तम परिवारगणोपेतोलक्ष्म्यासहज
गत्सते प्रतिष्ठामंत्रः श्रीकृष्णायसहपरिवारायपीठदेवतासहितायासनंदत्तमास्य
तांभगवतेनमः आवाहितेतुदेवेशेश्चार्घ्यादीनुपकल्पयेत् उपचर्यविधानेनचंदनेन
विलेपनं कुंकुमेनमहाभागकर्पूरागरुचर्चितम् पद्मकोशीरगंधैश्चमृगनाभिविमि
श्रितम् श्वेतवस्त्रयुगच्छन्नंपुष्पमालास्रुशोभितम् मल्लिकामालतीपुष्पैश्चंपकैः
केतकीदलैः बिल्वपत्रैरखंडैश्चतुलसीदलकोमलैः पूजनीयोमहाभागमहाभक्त्या
जनार्दनः द्राक्षाफलैर्जातिफलैःफलैरंभासमुद्भवैः नैवेद्यैर्विविधैःशुभ्रैर्घृतपक्वैरने
कधा दीपकंकारयित्वातुतथाकुसुममंडपम् गीतंवाद्यंतथानृत्यंस्वयंभक्त्यातु-
नारद शांतिपाठंशास्त्रपाठंगीतगानंतृतीयकं सहस्रनामचतुर्थंपंचमंनागमो
क्षणम् बालस्यचरितंविष्णोःपठनीयंपुनःपुनः एवंकृत्वाविधानंतुयथाविभूति
नारद गुरुंसंपूज्यसद्भक्त्यात्वर्चनीयस्ततोहरिः श्राद्धदानेपर्वणिचतीर्थेव्रतमखेषु

च वित्तशाठ्यंनकुर्वीतह्येतैर्धर्मप्रयोजनैः जीवतांयातियःकालोजयंतीवासरंविना त
त्खंडमायुषोव्यर्थंनराणामुपजायते अतिक्रम्यनरोयस्तुगुरुंधर्मोपदेशकम् विप्रैं
द्रंस्वेच्छयापुण्यंकुर्वाणोनरकंव्रजेत् अभिवाद्यगुरुंतस्माद्धर्मकार्यंतुसाधयेत् धर्म
मर्थंचकामंचयदीच्छेदात्मनोहितम् दद्यात्स्वशक्तितोभक्त्यागोमहीकांचनंवस्त्र इष्टं
धान्यंचवस्त्रंचभूषणंमधुरंवचः जन्माष्टम्यर्द्धरात्रेतुकृत्यंकुर्याद्यथाविधि पूर्वंस्थल
द्वयंकल्प्यजन्मस्थानंचगोकुलं पूर्वंगोष्ठंत्वलंकारैर्ध्वजतोमरमौक्तिकैः पूगीफलयु
तैःस्तंभैःकदलीभिश्चचित्रकैः वर्णकैर्विविधैश्चैवशय्याभोजनपानकैः अन्यैश्चवि
विधैःपुष्पैरलंकुर्वीतवैष्णवः भक्ष्यभोज्यलेह्यचोष्यविशेषान्साधयेत्तथा सूपादिपा
यसांतानिसर्वाण्येवचकारयेत् व्रजेश्वरंव्रजेश्वरीश्चगोपान्गोपीश्चवेषयेत् गाश्चव
त्सान्वत्सतरीःसंपाद्यैवचगोरसान् यथास्थानमलंकृत्यगोष्ठमित्यादिरीतितः जन्म
स्थानेश्रीकृष्णप्रादुर्भावंव्यभाव्यच ततःपंचामृतादिभिर्महास्नानंविधायच नि

शिपूजाविधातव्यादेवक्याःकेशवस्यच मंत्रेणानेनविप्रेंद्रगुरुणाभिहितेनच मंत्रः देव-
कीकृष्णमातस्त्वसर्वपापप्रणाशिनी अतस्त्वांपूजयिष्यामिभीतोभवभयस्यच पू-
जितातुयथादेविप्रसन्नात्वंवरानने यथाशक्त्यास्कपूजिताप्रसादंकुरुसुव्रते यथाप्तु
त्वंहरिंप्राप्तानिर्वृतिंचपरांध्रुवाम् तामेवनिर्वृतिंदेविस्वपुत्राद्धिददस्वमे श्रीकृष्णार्च
नमंत्रः अवतारसहस्राणिकरोषिमधुसूदन नसंख्यातेऽवताराणांकदाचिज्जायते
भुवि देवाब्रह्मादयोवापिस्वरूपंनविदुस्तव अतस्त्वांपूजयिष्यामिमातुरुत्संगसंस्थि
तम् वांछितंकुरुमेदेवदुष्कृतंचैवनाशय कुरुष्वमेदयांदेवसंसारार्तिभयापह एवंसं
पूज्यगोविंदंपात्रेतिलमयेस्थितम् ततस्तुदापयेदर्घमिंदोरुदयतःशुचिः अर्घ्यमंत्रः
श्रीकृष्णायदेवकीसहितायसगणसपरिवारायसायुधायश्रीराधिकासहितायअर्घ्यं
नमः नालिकेरेणशुभ्रेणदद्यादर्घ्यंविचक्षणः कृष्णायपरयाभक्त्याशंखोदेनविधा
नतः सोमायचविशेषेणदद्यादर्घ्यंतुपुत्रक अर्घ्यमिंदोगृहाणत्वंरोहिण्यासहितोम

म यमुनांकल्पितांतस्मात्कृष्णमुल्लंघ्यगोकुले बालकंपूर्वकल्पितेस्थापयेद्वसुदेववत्
ततःप्रभातसमयेउदितेरविमंडले कृत्वामाध्यान्हिकंकर्मसत्यप्रवणमानसः दापये
द्विधिवत्सर्वंश्रीगुरवेमहामुने दद्याद्वस्त्राणिसोष्णीषंकंचुकंमुद्रिकांतथा गुरुरपिम
हारत्नदानानिसकलानिच कारयेत्परयाभक्त्याव्रतनिष्पत्तिहेतवे ततोव्रजेश्वरीगे
हेगोपस्त्रीणांसमागतिम् प्रसिद्धरीतितःकृत्वामहोत्सवंचकारयेत् दधिकर्दमना
मानंदधिपयःप्रभृतिभिरितिकर्तव्यविधिः अथपारणानिर्णयः ब्रह्मवैवर्ते अष्ट-
म्यामथरोहिण्यांनकुर्यात्पारणंक्वचित् हन्यात्पुराकृतंकर्मउपवासार्जितंफलम् ति
थिरष्टगुणांहंतिनक्षत्रंचचतुर्गुणम् तस्मात्प्रयत्नतःकुर्यात्तिथिभांतेचपारणमिति
याज्ञवल्क्यस्तु याःकाश्चित्तिथयःप्रोक्ताःपुण्यानक्षत्रयोगतः ऋक्षांतेपारणंतासां
श्रवणंरोहिणींविना नक्षत्रांतेदिनांतेचपारणंयत्रनोदितम् यामत्रयोर्ध्वगामिन्यांप्रा
तरेवहिपारणामिति निंबार्कगास्तूत्सवांतेप्रामाणिकाः तदुक्तंश्रीमत्सनकादिभिः ति

थ्यंतेचोत्सवांतेवाव्रतीकुर्वीतपारणामिति तथावायवीये यदीच्छेत्सर्वपापानिहंतुंनि
रवशेषतः उत्सवांतेसदाविप्रजगन्नाथान्नमाशयेदिति अत्रदधिकर्दमपर्यंतमु-
त्सवंश्रीमदाचार्यवाक्यैस्तत्कृत्यंदर्शयति नवनीतदधितक्रैर्हरिद्रादिविमिश्रितैः प
रस्परंविनोदकैःपरमवैष्णवैःसह ततःस्नात्वातुनद्यादौचान्योन्यजलसेचनैः भगव
दवशेषेणप्रियेणैवमहात्मनः विधिनानेनसहितांजयंतींचकरोतियः नारीचोद्धरते
पुंसःपुरुषानेकविंशतिम् संक्षेपेणतुयःकुर्याज्जयंतींकलिवल्लभाम् मनसेष्टफलंप्रा
प्यगोलोकंसंप्रगच्छति एवंजन्माष्टमींकृत्वाकर्तव्यंनावशिष्यते सर्वपुण्यफलंप्रा
प्यह्यंतेयातिहरेःपदमिति अथश्रीमद्वृंदावनवल्लभभक्तिविधायिवैष्णवजनाल्हा
दकारिजगज्जननीश्रीकृष्णमनोहारिश्रीमद्राधिकावतरणंभाद्रशुक्लाष्टम्यां तदुक्तं
भविष्योत्तरे भाद्रेमासेसितेपक्षेयापवित्राष्टमीतिथिः राधाजन्मोत्सवंतत्रकारये
त्कृष्णसेवकः मध्यान्हेवृश्चिकेलग्नेज्येष्ठायाःसप्तमेपदे मुहूर्तेऽभिजितेविप्राजाता

राधाहरिप्रिया इतिसनित्यः भोविप्रायेनकुर्वंतिराधाजन्ममहोत्सवं तेषांतुवार्षि-
कंकृतंभस्माहुतिसमंभवेदिति भविष्योत्तरोक्तेः श्रीमदाचार्यवर्येणाप्युक्तम् शुक्ला
ष्टम्यांतुभाद्रस्यराधाजन्ममहोत्सवम् करणीयंबहुप्रेम्णाकृष्णजन्माष्टमीव्रतादि
ति तत्रव्रतंकर्तव्यमुत्सवमात्रंवासंदेहः प्राप्तस्तत्रोच्यते भाद्रशुक्लाष्टमींशुद्धांकुर्या
द्भक्तिविवर्द्धनीं उपोष्यानवमीशुद्धामुनियुक्तांचवर्जयेत् सर्वव्रताधिकापुण्याद्वा
दशीकृष्णवल्लभा तस्मात्पुण्यतमाविष्णोःकृष्णजन्माष्टमीशुभा तस्मात्प्रियत-
माश्रीमद्राधाजन्माष्टमीद्विजाः तस्मात्सर्वप्रयत्नेनसोपोष्यामानवैःकलाविति भ
विष्योत्तरोक्तेरुपवासस्यावश्यकतयाव्रतपूर्वकोत्सवंकार्यंनतूत्सवमात्रम् उत्सवंतु-
जन्माष्टमीवत् तत्रशुक्लैकादश्यांकटिदानोत्सवःकार्यः प्राप्तेभाद्रपदेमासिसितेकाद
श्यांसितेहनि कटिदानंभवद्विष्णोर्महापातकनाशनं देवदेवजगन्नाथयोगीगम्यश्रि
यःपते कटिदानंकुरुष्वाद्यमासेभाद्रपदेशुभे क्रीडयित्वाजलयानैःपुनर्मंदिरमान

येदिति भविष्योक्तेः तत्रशुक्लद्वादश्यांश्रीमद्वामनोत्सवःकार्यः श्रोणायांश्रवणद्वाद
श्यांमुहूर्तेऽभिजितिप्रभुः ग्रहनक्षत्रताराद्याश्चक्रुस्तज्जन्मदक्षिणाम् द्वादश्यांसविता
तिष्ठन्मध्यंदिनगतोनृप विजयानामसाप्रोक्तायस्यांजन्मविदुर्हरेरिति भागवतोक्तेः
मासिभाद्रपदेशुक्ले द्वादश्यांविष्णुदैवते अदित्यामुद्भवद्विष्णुरुपेंद्रोवामनोव्यय इति
हारीतस्मृत्युक्तेश्च ननु एकादशीद्वादशीचवैष्णवंचापितत्रचेत् तद्विष्णुशृंखलं
नामविष्णुसायुज्यकृद्भवेदिति विष्णुधर्मोत्तरे तथानारदीये यदानप्राप्यतेऋक्षंद्वा
दश्यांवैष्णवंक्वचित् एकादशीतदोपोष्यापापघ्नीश्रवणान्विता उभयोर्दैवतंवि-
ष्णुःपुराणपुरुषोत्तमः विभेदोपिनकर्तव्योविभेदासततेनरः तथाकुमाराश्चाहुः
मासिभाद्रपदेशुक्लाद्वादशीश्रवणान्विता महतीद्वादशीज्ञेयाउपवासेमहाफला ए
कादशीमुपोष्यैवद्वादशीमप्युपोषयेत् नचात्रविधिलोपःस्यादुभयोर्दैवतंहरिः अस
मासव्रतोह्येवकुर्याद्व्रतमितिश्रुतिरित्यादिवचनैःश्रवणद्वादशीव्रतानुष्ठानमेकादश्यां

प्रसक्तावपिनतत्रवामनजन्मोत्सवः कर्तुंशक्यः किंतुतद्विहिततिथ्यामेव अतएवश्रव
णद्वादशीवामनजन्मोत्सवयोर्भेदस्तु ग्रंथकृद्भिर्व्याख्यातत्वान्नास्माभिः प्रपंच्यते त
थापिसिद्धांतमात्रंतुवदामः श्रीमद्वामनोत्सवस्तु भाद्रशुक्ल द्वादश्यामेवेतिनियमः
श्रवणद्वादशीतुयदाकदावातदुक्तरीत्यायोगेनैवश्रवणद्वादशीतिमंतव्या तथाच
स्कंदपुराणे शुक्लेवायदिवाकृष्णेद्वादशीश्रवणान्विता एकादशीमेकभक्तंत्वंद्वाद
शीसमुपोषणात् प्रमार्जयतिपापानिलिखितानिस्वयंयमः माघेमासिकृतायेन
द्वादशीश्रवणान्विता फाल्गुनेथाश्विनेवापिश्रवणेनबुधेनच कर्तव्यासंगमेसाच
द्विषड्विजयास्मृतेति इत्यत्रश्रवणद्वादश्यांश्रवणयोगस्तुमध्यान्हावधिनियामके-
तदुक्तव्रतानुष्ठानम् नभस्यद्वादशीशुक्लाकृष्णेमाघेथफाल्गुने इत्याद्युपक्रम्य आ
मध्यान्हेनचेद्यस्तुकुर्यात्तत्रैवपारणामितिस्मृतिरत्नाकरोक्तेः अथपरेद्युर्वामनोत्स
वानुष्ठानपक्षेतुद्वादशीश्रवणयोरामध्यान्हावधितद्योगनियामकेतदुक्तव्रतानुष्ठा

नं द्वादशीमात्रसत्वेतु तदुत्सवमात्रमित्यभिप्रेत्याह गोतमः उदयस्पर्शिनीविष्णुतारका
द्वादशीयुते साम्यप्रोष्ठपदे विष्णुर्जातः कश्यपगेहतः उदयंव्याप्ययोगोस्तितिथिनक्ष
त्रसंयुतः आमध्यान्हेनचेत्सोयंकुर्यात्तत्रैवपारणमित्यत्रैवकारेण जन्माष्टमीव्रतव
दस्यानुष्ठानमितिध्वनितम् जन्माष्टमीनिर्णयापेक्षया प्रकृतेः पारणानियमवा-
क्यविशेषस्मरणात् पूर्ववेधस्यातिदूषित इवनैकादशीवेधस्य परिहार्यत्वाच्च किंतु
तद्भगवद्वासरत्वेनातिप्रशस्ततरत्वेनांगीकार्यत्वात् ननु तदुक्तरीत्योपवासद्वयप्र
सक्तौकथंतदुपवासद्वयंकर्तुंशक्यम् पारणांतंव्रतंज्ञेयंव्रतांतेविप्रभोजनं असमा
प्तेव्रतेपूर्वेनैवकुर्याद्व्रतांतरमिति विष्णुधर्मोक्त्याविधिलोपप्रसंगादितिचेन्न एकाद-
शीमुपोष्यैव द्वादशींसमुपोषयेत् नचात्रविधिलोपः स्यादुभयोर्दैवतंहरिरितिभवि-
ष्योत्तरोक्तेः उपवासद्वयासमर्थेतु द्वादश्यामेवव्रतंकर्तव्यम् तदुक्तंनारदीये उपोष्य
द्वादशींपुण्यांश्रवणर्क्षेणसंयुताम् एकादश्युद्भवंपुण्यंनरः प्राप्नोत्यसंशयम् वाज

पेयेयथायज्ञकर्महीनोपिदीक्षितः सर्वंफलमवाप्नोतिचास्नातोप्यहुतोपिसन् एवमे-
कादशींभुक्त्वाद्वादश्यांसमुपोषणात् पूर्ववासरजंपुण्यंसर्वंप्राप्नोत्यसंशयमिति पार
णानिर्णयस्तुजन्माष्टमीवत् अत्रोत्सवांतस्तुरात्रिजागरणमारभ्यपरदिनेभगवत्पूज
नावधिर्ज्ञेयः तत्रशुक्लचतुर्दश्यामनंतोत्सवः मासिभाद्रपदेशुक्लेचतुर्दश्यांद्विजोत्त
म अनंतंपूजयेद्भक्त्यादानंदद्याच्चशक्तित इतिपुराणांतरोक्तेः साविद्धाधिकेकिंचिन्मा
त्रनिर्गमनेपरेद्युरेव चतुर्दश्युदयेकिंचिदितिनागरखंडोक्तेः प्रसंगादिदमप्युक्तम् इति
भाद्रपदकृत्यम् अथाश्विनकृत्यम् तत्रकृष्णप्रतिपदमारभ्यशुक्लप्रतिपदावधिश्रा
द्धकालः तदुक्तंनागरखंडे नभस्यस्यापरेपक्षेतिथिषोडशकस्तुयः कन्यागतान्वि
तश्चेत्स्यात्सकालःश्राद्धकर्मणीत्यत्रासंदिग्धसंदिग्धवचनंनभस्यस्य इति भ्रमांतर
मासेन तिथिषोडशकस्तु देवलेनस्पष्टतयाउक्तः अहःषोडशकोयस्तुशुक्लप्रतिपदा-
सह चंद्रक्षयाविशेषेणसापिदर्शात्मिकास्मृतेति सश्राद्धोनित्यः आषाढ्याःपंचमेप

क्षेयः श्राद्धं न करिष्यति शाकेनापि दरिद्रोपि सोंत्यजत्वमुपेष्यति आसनं शयनं भोज्यं
स्पर्शनं भाषणं तथा तेन श्राद्धं करिष्यंति येते पापतरा नरा इति नागरखंडोक्तेः यत्र श्राद्ध
निषेधस्तच्छ्रीमन्नारदआह ननंदासु भृगोर्वारे रोहिण्यांच त्रिजन्मसु रेवत्यांच मघा
यांच कुर्यादापरपाक्षिकमिति नंदाः प्रतिपत्षष्ठ्येकादश्यः त्रिजन्मान्याद्यदशाम एकोनविं
शतिनक्षत्राणि ननु धनाढ्यश्चेन्निषेधतिथौत्यक्त्वा विहिते श्राद्धं कुर्यात्तत्र धनहीन
स्यकागतिरितिचेदुच्यते योवैश्राद्धंनरः कुर्यादेकस्मिन्नपि वासरे तस्य संवत्सरं या
वत्तृप्ताः स्युः पितरोध्रुवमिति नागरखंडोक्तेस्तन्निस्तारः नियमस्तत्रैव आषाढ्याः पं
चमेपक्षे कन्यासंस्थे दिवाकरे मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः तस्य संवत्स
रं यावत्संतुष्टाः पितरोध्रुवमिति तथा कात्यायनः यातिथिर्यस्यतातस्य मृताहे तु प्रव
र्तते सातिथिः पितृपक्षेतु पूजनीया प्रयत्नत इति ननु यस्य पंचम्यवधौ पितुर्मृता-
हनि कन्यासंक्रमश्चेत्सषष्ठ्यां सप्तम्यां वा तदा स किं करोतीति तदुच्यते आषाढीमवधिं कृ

त्वायः स्यात्सक्षस्तु पंचमः श्राद्धं तत्र प्रकुर्वीत कन्यागच्छतु वा न वा इति नागरखंडोक्तेः
किंच विवाहे विहिते मासांस्त्यजेयुर्द्वादशावधि सपिंडाः पिंडनिर्वापं मौंजीबंधे षडेव हि
इति ज्योतिःपराशरेणोक्तम् तस्यापवादः स्मृतिसंग्रहे महालये गयाश्राद्धे मातापित्रोर्मृ
तेऽहनि यस्यकस्यापि मर्त्यस्य सपिंडीकरणे तथा कृतोद्वाहोऽपि कुर्वीत पिंडनिर्वपनं सुत
इति तत्र पिंडदानेऽधिकारिणो हेमाद्रौ उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः श्व
शुरभ्रातृतत्पुत्रऋत्विग्शिष्याप्तपोषकाः भगिनीस्वामिदुहितृजामातृभगिनीसुताः
पितरौ पितृपत्नीनां पितुर्मातुश्च या स्वसा सखिद्रव्यादशिष्याप्तास्तीर्थे चैव महालये
एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नत इति विरक्तानां तु श्राद्धकरणे द्वादश्यामेव निय
मः तच्चोक्तं पृथ्वीचंद्रोदये यतीनां च वनस्थानां वैष्णवानां विशेषतः द्वादश्यां विहितं
श्राद्धं कृष्णपक्षे विशेषत इति वैष्णवानां त्वयं विवेकः यदा शुद्धैकादशी तदा द्वादश्यां श्रा
द्धं यद्येकादशी विद्धा तदा त्रयोदश्यां श्राद्धं कर्तव्यं ननु अद्यप्रभृति यः श्राद्धं त्रयोद-

श्यांकरिष्यति कन्यासंस्थेसहस्रांशौतस्यस्याद्दंशसंक्षय इति नागरखंडोक्तेस्तत्र-
श्राद्धेऽप्राप्तेकिंकर्तव्यमितिचेदुच्यतेतत्रैव अतःश्राद्धंविनादेयंतद्दिनेमधुपायसम्
वैष्णवेभ्यःस्त्रुविप्रेभ्यःपितॄणांतुष्टयेनृप इति किंच मुंडनंपिंडदानंचप्रेतकर्मचसर्व
शः नजीवत्पितृकःकुर्य्याद्गुर्विणीपतिरेवचेति दक्षोक्तेर्जीवत्पितृकस्यसर्वश्राद्धेषुनि
षेधेप्राप्तेविधिंदर्शयति निर्णयामृते अन्वष्टक्येगयाप्राप्तौसत्यांयच्चमृतेहनि मा
तुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवति इति अत्रतुनवम्यांनियमः तत्रैव सर्वासाम
पिमातॄणांश्राद्धंकन्यागतेरवौ नवम्यांहिप्रदातव्यंब्रह्मलब्धवराहिता इतिमातृश्रा
द्धेस्त्रीभोजनस्यावश्यकता तदुक्तंमार्कंडेये मातुःश्राद्धेतुसंप्राप्तेब्राह्मणैःसहभो-
जनम् स्त्रुवासिन्यैप्रदातव्यमितिशातातपोब्रवीदिति तत्रषष्ठ्यांभौमवाररोहिणी
नक्षत्रयोर्योगेकपिलाषष्ठी सोक्तावाराहे नभस्यकृष्णपक्षेतुरोहिणीयातुभूसुतैः

१ ब्रह्मपुराणे मार्गशीर्षेचपौषेचमाघेप्रौष्टेचफाल्गुने कृष्णपक्षेषुपूर्वेद्युरन्वष्टक्यंतथाष्टमी.

युताषष्ठीपुराणज्ञैःकपिलापरिकीर्तिता व्रतोपवासनियमैर्भास्करंतत्रपूजयेत् कपिलांच
द्विजाग्र्यायदत्वाक्रतुफलंलभेदिति तत्रत्रयोदश्यांयदागजच्छायायोगस्तदातत्र-
श्राद्धंकर्तव्यं आषाढ्याःपंचमेपक्षेगयामध्याष्टमीस्मृता त्रयोदशीगजच्छायाग-
यातुल्येतुपैत्रके इतिब्रह्मांडोक्तेः गजच्छायायोगस्तुब्राह्मेभिहितः योगेमघात्रयोद
श्यागजच्छायासुसंज्ञकः भवेन्मघायांसंस्थेचशशिन्यर्केकरेस्थित इति इदंपक्षकृत्यं
प्रसंगादुक्तं तत्रशुक्लसप्तम्यांमूलनक्षत्रेसरस्वतीस्थापनमुक्तं देवीपुराणे मूलेषु
स्थापनंदेव्याःपूर्वाषाढासुपूजनं उत्तरासुबलिंदद्याच्छ्रवणेनविसर्जयेत् इति रुद्रया
मलेच मूलऋक्षेसुराधीशपूजनीयासरस्वती पूजयेत्प्रत्यहंदेवींयावद्वैष्णवमृक्षकं
नाध्यापयेन्नचलिखेन्नाधीयीतकदाचन पुस्तकस्थापितांदेवींविद्याकामोद्विजोत्तम इ
तिप्रसंगादिदमप्युक्तम् तत्रशुक्लदशम्यांविजयोत्सवः विजयायांदशम्यांचमुहूर्तेवि
जयाभिधे श्रवणर्क्षेचराजेंद्रप्रस्थानंविजयप्रदमिति गर्गोक्तेः अत्रैकादशमुहूर्तोवि

जयाभिधः सचज्योतिःशास्त्रेप्रसिद्धः किंच यदापरेद्युः केवलादशमीकिंचिद्दिङ्गितात
दापराजितापूजनंपूर्वेद्युरेवप्राप्तंश्रीभगवदुत्सवस्तुपरेद्युरेव तदुक्तंस्कमंतुना पूर्ववि
द्धैवकर्तव्यादशम्यांपूजयेच्छमीम् परविद्धैवकर्तव्याअभ्यंगादिमहोत्सवे इति अत्रा
दिशब्दोराजाभिषेकादिपरः इषस्यदशमींशुक्लांपूर्वविद्धांनकारयेत् श्रवणेनापिसं
युक्तांराज्ञांपट्टाभिषेचने इतिपुराणसमुच्चयोक्तेः प्रसंगादिदमप्युक्तं तत्रविशेषकृत्य
मस्माकंश्रीकुमाराश्चाहुः विजयादशमींज्ञात्वारामलीलानुसारिणम् आश्विनस्य
सितेपक्षेसीमातिक्रमणोत्सवमिति तथाश्रीमदाचार्याश्चाहुः श्रीरामंरथमारोप्य-
सर्वानुकरणैःसह समतिक्रामयेद्ग्रामंस्वसीमानंविधानतः रावणादिविजयायसी
तालक्ष्मणसंयुतं रामलीलांसमुद्दिश्यरावणादिवधादिकमिति तत्रपूर्णिमायांरासो
त्सवःकार्यः आश्विनशुक्लपूर्णिमामधिकृत्यनारदीयपुराणेऽभिहितः यःकुर्याद्ब्राह्म
णश्रेष्ठरासक्रीडामहोत्सवम् तस्यचित्तेपरांभक्तिंयावदिंद्रंप्रयच्छति साविद्धाधिके

तुपरेद्युरेव भूतविद्धानकर्तव्यादर्शपूर्णाकिदाचन इतिब्रह्मवैवर्तोक्तेः पूर्वविद्धदिनेदत्तं
यत्किंचनपूजनंचवै नैवगृण्हातिवैकुंठःपूजांतद्दिनसंभवामिति नारदीयोक्तेश्च उदये-
याकलामात्रासाव्याप्तोत्यखिलंदिनमित्यादि रासकर्तव्यतायाविधिंदर्शयति बृहद्गौतमी
ये श्रीगौतमउवाच वंदेहंश्रीगुरुंदेवंरासकेलिस्वरूपिणं सखीरूपधरंविज्ञंराधाकृष्णा
त्मकंविभुम् आदावाचमनंकार्यंप्राणायामंततःपरम् प्रतिज्ञातन्मनोवाग्भिर्महत्सं
गसमाश्रितः सावधानंमनःकृत्वाकारयेद्विधिसंयुतम् राधाकृष्णाद्यवेषंच प्रतिष्ठां
कारयेत्त्ववं रासस्थलप्रतिष्ठेयंमयाकर्तुंनियुज्यते श्रीकृष्णारमणार्थायराधया-
सहतद्रतेः रासाढ्यौराधिकाकृष्णौरसरूपौरसात्मकौ रासक्रीडाप्रियौपूर्णौस्वी-
कारंकुरुतंनुमे अथश्रीरासक्रीडामंत्रस्य मुग्धानारदऋषिर्गायत्रीछंदः ॐ क्लींसा
क्षान्मन्मथबीजं प्रेमाध्वोद्भवस्वाहाशक्तिः श्रीराधाकृष्णोदेवोरासक्रीडायापरस्प-
रानंदप्राप्त्यर्थेजपेविनियोगः ॐ क्लीं अंगुष्ठाभ्यांनमः ॐ रासतर्जनीभ्यांनमः ॐ रास

मध्यमाभ्यांनमः ॐ विलासिन्यौ अनामिकाभ्यांनमः ॐ श्रीराधाकृष्णौकनिष्ठिका-भ्यांनमः ॐ स्वाहाकरतलकरपृष्ठाभ्यांनमः ॐ क्लींहृदयायनमः ॐ रासशिरसे स्वाहा ॐ रासशिखायैवषट् ॐ विलासिन्यौनेत्रत्रयायवौषट ॐ श्रीराधाकृष्णौक वचायहुं ॐ स्वाहाअस्त्रायफट् अथध्यानं ध्येयंवृंदावनंरम्यंद्रुममंडलमंडितम् द्विजालिकुलसन्नादिफलितंपुष्पिपत्रितम् लसन्मणिमयीभूमिजांबूनदपरिष्कृतं कंकणाकारकालिंदीहंसपद्मादिसंकुलं तन्मध्येमंडलंस्फूष्टुयोजनत्रयवर्तुलम् त न्मध्येषोडशदलंपद्मंतदुपरिस्थितौ किशोरौगौरश्यामांगौकोटिकंदर्पमोहनौ रा धाकृष्णावितिख्यातौवेणुवीणान्वितौनुमः मुख्याष्टसखिभिर्युक्तौगोपिकाशतयू थपौ राधाकृष्णावहंवंदेरासमंडलमध्यगौ प्रियलोकरसौदिव्यंगोलोकाख्यंपदं त्विह गच्छेतिहरिक्रीडार्थंवृंदारण्यंनमाम्यहम् मंडनंस्फमहत्सौम्यंसखियूथायु तान्वितम् वृंदादेविनमस्तेस्तुइहागच्छसमंपदम् राधाकृष्णाविलासार्थमागच्छ

रविजासरित् मन्मथेमन्मथौसाक्षात्केलिरूपौरतिप्रियौ राधाकृष्णावहंवंदेरासक्रीडा
सुखावुभौ नमःशशांकदेवायनिर्मलोडुगणायच उदितेहिसुक्रीडार्थंराधाहर्योर्यदि-
च्छया यजेदत्रसुभूषाभ्यांमंडलेस्मिन्प्रतिष्ठितम् बर्हापीडंचवेणुंचकृष्णक्रीडोचितं-
भवम् चंदनंवंदनंपुष्पंबहुधाभक्षसंचयम् तांबूलंसुष्ठुगंध्यंचयच्चान्यदुपचारकम्
धूपदीपार्तिकायुक्तंमूलमंत्रैर्चयेद्बुधः एवंरासेयजेत्सत्यंराधाकृष्णात्मकोभवेत् यत्र
यत्रस्थितिर्यस्यरासक्रीडावलोकने तत्रतत्रसुखेस्थित्वादासीभूत्वाविलोकयेत् ना
नारूपाणिवाद्यानिवादकागायकास्तथा राधाहर्योर्विलासार्थेसानुकूलाभविष्यथ
तत्तदाविलिखेत्सुष्टंमंडलंकमलाकृति दलैःषोडशभिर्युक्तंकर्णिकाकेशरान्वितम्
पत्रेपत्रेलिखेत्सख्याआद्यायापूर्ववत्क्रमात् तत्सखीतत्समीपस्थेपत्रेकृत्वाप्रदक्षि
णम् मुख्यपत्रेसखीमुख्यासमीपेत्रसमीपगा एवंषोडशभिःपत्रैर्लेख्याःसख्यद
सहानुगाः देवादक्षिणतःपूर्वेस्वगुरुंस्थापयेत्सुधीः राधाकृष्णात्मकंश्रीमान्राधा

कृष्णस्वरूपिणम् प्रेमतत्वमयंस्पष्टंहेयरागविवर्जितम् सखीरूपधरंभूत्वागुरुंरासे-
विलोकयेत् तथाभूतात्मनोरूपंतत्कृपाप्रापितोभवत् अनन्यसाधनैर्लभ्यःप्रवेशोरा
समंडले तस्मात्सर्वात्मनासेव्यःश्रीगुरुस्तत्पदेप्सुभिः विनाईदृग्विधांदीक्षांप्रसादा
त्सद्गुरोर्विना विनाईदृग्विधैर्धर्मैःकथमीदृग्विधोभवेत् तस्मान्नत्वागुरोःपादौहृदि
रूपंविचिंतयेत् वचसातद्गुणान्गायन्मंडलंस्थापयेत्पुनः तन्मध्येराधिकाकृष्णौ
गौरश्यामौसुशोभनौ गुरुंचदक्षिणेपार्श्वेपूर्वेचललितांसखीम् विशाखांदक्षिणे
पूर्वेदक्षिणेचंपकीलताम् दक्षिणेपश्चिमेचित्रांतुंगविद्यांतुपश्चिमे पश्चिमोत्तरयोः
स्थाप्यामिंदुलेखांसुशोभनाम् उत्तरेरंगदेवीस्यादष्टमीषुसुदेविकाम् उत्तरेंद्रदिशा
यांचराजतींसहसोविकाम् इत्यष्टौचसखीमुख्यास्तस्यांतस्यांसखीस्तथा प्रस
न्नास्याःप्रपश्यंत्यःभ्राजत्यःसर्वतोदिशाम् वृंदाद्यान्याःसखीःसर्वाःस्थापयेतत्समीप
तः स्वाधिकाराःसखीमुख्यास्ततोपूज्याःपृथक्पृथक् एवंतन्नामभिःसर्वपूज्यंयूथ

सहस्रकं सर्वतोमंडलेस्थाप्यंमध्येश्रीराधिकाहरी कोटिकंदर्पलावण्यौलावण्यामृतमे
दुरौ पीतारुणलसद्वस्त्रौश्यामगौरांगदंपती शिखिपिच्छलसन्मौल्यौमुक्तावलिलस-
च्छिखौ वस्त्राभरणवेषाभ्यांरेजेमंडलमध्यगौ नानाकेलिकलाकांक्षाकांक्षितौप्रेय
सीप्रियौ हासयंतौलसद्दंतपंक्तावन्योन्यवीक्षणौ अन्योन्यरसमाध्वीकमादितौहरि
राधिका आरभत्यौमहारासौनृत्यवाद्यप्रहर्षितौ नानाकामकलामूर्तिस्फूर्तिमद्भुत-
तालयोः मुमुहुर्देवतादेव्यःपन्नगाःपन्नगेश्वराः मुनयःसिद्धगंधर्वामनुष्याःपशुपक्षि
णाः भूमिरुहाःलताकांडाःसरिच्छैलेंद्रवीरुधाः चित्रायतभवत्सर्वाःस्वात्मानंनैवस
स्मरुः गोपियूथावृतःसाक्षाद्भगवान्राधिकापतिः क्रीडंतंराधिकासार्द्धंप्रतिगोपिस्व
रूपधृक् महदानंदनिष्णाताकल्पोयमशरच्छपां नविदुःकेलिलोलांगाःक्वाहंक्वगिरि
विग्रहः विगलत्कबरिकाःस्रग्भिःश्लथद्भूषणवाससः परमानंदसंहृष्टाःसहसख्यो
त्सुकाश्रयाः एवंसद्भिःप्रकर्तव्यंरासस्थलप्रतिष्ठितम् सर्वदामनसाधार्यंराधासख्यं

प्सुभिर्जनैः यएवंपठनेसौम्यत्रिसंध्यंनित्यमेवहि अंबरीषजनःसोपिराधिकासख्यमाप्नु
यात् यएवंश्रूयतेपुण्यंराधाकेलिकलामृतं सयातिपरमंस्थानंयत्रश्रीराधिकाहरी अ
नेनमनुनाराजन्संस्कृतःस्त्रीपुमानपि तस्यभवंतिनद्रूपंयद्रूपंरासमंडले यएवंकेलि
मधुरंदृश्यतेवानुमोदते सपुमान्सर्वसंपद्भिःकृष्णसान्निध्यमाप्नुयात् यएवंराधिका
केलिंश्रुत्वाकलिमलापहाम् निंदंतिजारजायेवैसत्यंसत्यंनृपोत्तम यएवंकुरुतेराजन्-
राधाकृष्णमहोत्सवम् ससत्यंराधिकाकृष्णकेलिदर्शीभविष्यति कृष्णक्रीडान्वि-
तांलीलांयःकरोतिनृपोत्तम सयातिपरमाख्यानंस्थानंद्रष्टानुमोदक इति ग्रंथां
तेमंगलंदर्शयति गोपालंबल्लवीवंदेनित्यरासरसोत्सुकम् राधांकृष्णात्मिकांकृष्णं-
राधात्मकमनुत्तमम् १ नाहंविप्रोनभूपोनकृषिरतजनोनापिशूद्रोवरश्चनाहंवर्णीगृ
हस्थोविपिनहितरतिःकर्महारीयतिर्वा नाहंशैवोनशाक्तोनचगणपपतिःसूर्यकी-
र्त्याधिकारीकिंतुश्रीपंकजांघ्रेःपरमसुखनिधेःकृष्णचंद्रस्यदासः २ सुधियःक्षम्य

तांसंतोममधार्ष्ट्यंक्षमंतुकृपालवः संग्रहःस्वप्रबोधार्थंकृतोनानानिबंधतः ३ इतिश्री
मत्परमवैष्णवाचार्यश्रीमन्निंबादित्यमतानुयायिश्रीमत्तुलारामाभिधाविदितचर
णचिंतकेनधनीरामेणकृतायांनैंब्यव्रतसिद्धांतज्योत्स्नायांद्वादशमासव्रतोत्सव-
विशेषविधिर्नामद्वितीयोल्लासः २ ७ समाप्तोऽयंग्रंथः ७
मंत्रप्रवर्तकत्वंयामले नारायणमुखांभोजान्मंत्रस्त्वष्टादशाक्षरः आविर्भूतःकुमारै
स्तुगृहीत्वानारदायच उपदिष्टःस्वशिष्यायश्रीनिंबार्कायतेनहि सनत्कुमारागमे
भगवान् मद्यागंमानसंवादौकुमारेभ्योददाऽवहं तैःस्वशिष्यप्रशिष्येभ्यश्चैति
ह्येनप्रवर्तितः केवलंवेदमाश्रित्यकःकरोतिविनिर्णयं बलवान्लौकिकोवेदाल्लो-
काचारंतुकस्त्यजेत् केवलंशास्त्रमाश्रित्यनकर्तव्योविनिर्णयः युक्तिहीनविचा
रेतुधर्महानिःप्रजायते ७ ग्रंथश्लोकसंख्या १३०० ७

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यपुष्करपीठस्थश्रीमन्निम्बार्काचार्यश्रीघनश्यामशरणदेवाज्ञया तच्छिष्येण भगीरथात्मज-हरिप्रसादेन मोहमय्याख्यपत्तने जगदीश्वराख्यशिलायंत्रालये अंकयित्वा प्रसिद्धिं नीतः। संवत् १९४६.

यह पुस्तक श्रीसलेमाबादमें रहनेवाले श्रीराधामाधवजीके पूजारी वैष्णव श्रीबलदेवदासजी इन्होने हमकूं दिया सो सर्व वैष्णवलोकोंके उपयोगार्थ छपायके प्रसिद्ध किया है. संवत् १९४६.

सन १८६७ का आक्ट २५ प्रमाणें सरकारमे रजिस्टर करके इस पुस्तकका हक्क हरिप्रसाद भगीरथजीनें अपना रखा है.

## पुस्तक मिलनेका ठिकाणाः-

**मुंबई-** कालकादेवीरोड, हरिप्रसाद भगीरथजी पुस्तकालय.

**कानपूर-** हनुमानदास ब्रजवल्लभकी पुस्तकालय, चौक कोतवालीके पास.

